॥ श्री ॥

॥ हितविजयजी जैन ग्रन्थमाला पुष्प नं १७ ॥

श्रीतपागच्छनायक-अकबरप्रतिबोधक-जगद्गुरु—

# हीरचरित्रम् ॥

रचयिता—

...देव-मेवाडकेसरि-श्रीनाकोडातीर्थोद्धारक-जैनाचार्यश्रीमद्विजय—

हिमाचलसूरीश्वर-शिष्यमुमुक्षुभव्यानन्दविजयः "शास्त्री"




वीरात्-२४७९
विक्रमात्-२००९
सन्-१९५२
हीरस्वर्ग सं. ३५७

प्रथमावृत्ति
१०००

मुद्रक
आनंद प्रेस
भावनगर

हीर सूरि आचार्य पद कुंडली





## समर्पणम्

श्रीमतां सद्धर्म्मविनयमनस्वितादिगुणविभूषितानाम्प्रातःस्मरणीयजै-
नतन्त्रस्वतन्त्राचार्य्यवर्य्यकुलकिरीटजगद्गुरुहीरसूरिकुलकुमुददि-
वाकराणां दिगन्तरालविख्यातधवलकीर्तीनाम्प्रतिपलाहिंसा-
पालनतत्पराणां बालब्रह्मचारिणां देवज्ञरत्नानामनवद्याने-
कविद्याविद्योतमानमानसकैवल्यपथपथिकपन्यासवर्य्य-
हितविजयगुरुचञ्चरीकानां मेवाडकेसरिनाकोडाद्य-
नेकतीर्थोद्धारक जैनाचार्य्यविजयहिमाचलसूरि-
गुरुदेवानाम्पादपङ्कजयोः पुष्पमिदं सादरं
सविनयं सबहुमानञ्च समर्पयति-

तदीयशिष्यः-

भव्यानन्दाविजयः

॥ ७ ॥

# प्रस्तावना

आये सहृदयहृदया विपश्चिद्वराः सभ्याः !

जगद्गुरुहीरसूरिपदोपाख्यानस्य बहुत्र वर्तमानत्वेऽपि तेषु बहुश समासापन्नपद्यमयत्वेन प्रौढा एव वैयाकरणा याथातथ्यतस्तदभिप्रायज्ञानीयुर्न चाल्पज्ञा, अतएव बहुतराणा जिज्ञासूनामत्याग्रहवशात्तत्सम्बन्धिपूर्वोपनिबद्धेतिहासरासकाव्यकोशमाहात्म्यादीन्येकैकश आलोड्य सरलसस्कृतगिरासकलोपयोगिगद्यमय हीरचरित्रन्निर्माय पिपासुना विपश्चिता वाचकप्रवराणाम्पुरत समुपस्थाप्यते ।

अत्र चरित्रनायकेन सत्रा साधु–साध्वीनमाचार श्रावकश्राविकाणा देवगुरुभक्तिपरायणता, चम्पाचरितपाड्मासिकतप परीक्षा, अकव्वरसाहिना सूरेराह्वानम्, सूरिपारिक्षा, खट्वाध प्रदेशे एकामजाम्पटखण्डैराच्छाद्य तदुपरि सूरिसमुपवेशनप्रश्ने तत्र जीवत्रयोद्घाटनेन अयोग्यन्तत्, आकाशप्रदेशे प्रक्षिप्तोष्णीषस्यानयनप्रश्ने रजोहरणस्थल्घुल्गुडेन ताड्यमानन्तदागमनम्, ईश्वरखुदाप्रश्ने ईश्वरपरिचय, धर्मप्रवचनम्, मूर्तिविषये देव्यवयवकुचदर्शनप्रयोज्यविकारोदयप्रश्ने सदुत्तरप्रतिपादनन् जीर्णकन्थोत्थापनप्रश्ने तृणाग्रभागेन दूरप्रदेशे प्रक्षिप्य ता तदीयाहङ्कारभञ्जाय एकविंशत्याटोपरि गुरुमुपवेश्य विंशति· पाट क्रमान्निसार्य्य निराधारे तस्मिन्पाटे समुपविष्टगुरु सभासद प्रदर्श्य तदुत्तरप्रदानम्, चमत्कारप्रदर्शनप्रश्ने साहे सप्तपूर्वजस्य प्रत्यक्षम्, साहे सूरिगुरौ–आत्यन्तिकीश्रद्धाभक्ती, जगद्गुरुबिरुददानम्, कारागारपिञ्जरनिवासिनामभयदानम्, अहिंसाफुरमाणम्, चरमश्रद्धाञ्जलि, सूरे पार्श्वनामकविमानेन सुधर्मानामकदेवलोकगमनम्, सूरिविषयमधिकृत्य दैविकनाटकम्, विप्राणा विमानदर्शनम्, सूरिसस्कारभूमिसमीपे रसालतरुस्तन्निशाया मञ्जरीफलसमन्वित, पट्टधरविजयसेन-

सूरिविलापः, अशान्तस्वान्तजनानां शोकसमुद्राद्बहिर्गमनम्, तपागच्छगगनमण्डलेऽपराद्वितीयाचन्द्रोदयः, इत्यादि अघटितघटनापटीयसीः कथास्सान्निवेशिताः ।

तत्तत्कथासुधान्निपीय विमृश्य च संसार-दावानलदग्धाः श्रीमन्तश्च लोलुपा द्रागेव कैवल्यपथपथिकायमानास्स्युरित्यस्माकमाश्वासः । पुरा जैनेतरा म्लेच्छा अपि अकब्बरसाहयः कथम्भूता आसन् परन्तु सूरिगुरुगोष्ठ्या कथन्निर्मलचेतसः सञ्जाताः । साधूनान्तदानीन्तना-देशना क क कीदृशी चासीत्, श्रावकाश्च गुरुपादाज्ञापरायणा कीदृश इत्यादि सर्वं रहस्यं चरित्रमिदं यथा प्रतिपादयति न चान्यत्तथा, तत्सर्वममुनैव लोचनगोचरीभूतं स्यादित्येतावानायासः ।

यदा—चाहम्परमकारुणिकाचार्य्यवर्य्यश्रीमद्विजयहिमाचलसूरिगुरुपदाम्बुजान्तिके तदीयासीमदयया योगारूढस्तदैतस्य प्रकाशनसमये समयाभावाद्वाराणसेय नव्यन्यायव्याकरणाचार्य्याध्यापकवर्य्ये मैथिलप्रवर प. श्रीकृष्णदेवशर्मशास्त्रिवर्य्ये संशोधनकार्य्यभारोयमारोपितः, तदत्र यत्कष्टन्तेनानुभूतन्तदर्थमात्मानमाभारिणम् मन्ये ।

प्रकाशने चास्मिन् ये ये महानुभावाः परोपकारबद्धपरिकरा विवेकविनयसम्पन्नाः सद्गृहस्थाः श्रेष्ठिवर्य्या आर्थिकसहायका अनुमोदकाश्च ते सर्वे धन्यवादार्हाः ।

अथ प्रमादस्य स्वाभाविकत्वात् कण्टकाक्षरदोषाद् वा यदत्र स्खलनं सञ्जातं तत्क्षमासारा विपश्चिद्वरा मधुरदृशा निरीक्षमाणाः ससूचनं क्षमिष्यन्ते मामिति सप्रश्रयं निवेदयति—

भावत्को—मुमुक्षु भव्यानन्दविजयः

# भूमिका

अये सरलहृदया गुणैकपक्षपातिनः !

चरित्रमिदञ्जगद्गुरुहीरकुलावतंस–पन्यासवर्य–पूजनीय–श्रीहितविजयगुरुपदाम्बुजालि–जैनागमज्योतिःशिल्पतत्त्वज्ञ–जैनाचार्य श्रीमद्विजयहिमाचलसूरिचरणचञ्चरीक तत्पट्टधर–शिष्यरत्न वैयाकरण मुमुक्षु श्रीभव्यानन्दविजय 'शास्त्रि' विनिर्मितं समवलोक्य साम्प्रतम्प्रमोदमनुभवामि नितराम् । अस्मिन् सरलेन शब्देनार्थोऽभिप्रायस्तु प्रायः सकलहीरविषयाधिकृतग्रन्थानुयायी सम्यक्प्रकाशितो लसति, तपोगच्छाम्बराब्ज–हीरसूरि–महाराजोपाख्यानप्रतिपादकनिखिलकाव्यकोशमाहात्म्यार्वाचीन–प्राचीनेतिहासरासेभ्यो ज्ञेये प्रस्तुतमेक पर्याप्तम्प्रतिभाति । अलम्बहुलायासेन । एतदीय रसास्वादे कीदृशम्प्रमोदमावहति, तत्रानुभवमात्रमेव प्रमाणम्, नहि मोदकादिरसाद्यनुभवी तदननुभाविनं रासनप्रत्यक्षङ्कारयति, अपितु शाब्दमेव ।

यद्यपि विद्यन्त एव प्राश्चिप्रचुराणि काव्यानि, परन्तु तेषु किञ्चिदसम्पूर्णं किञ्चिदतिसमासापन्नं किञ्चिद्गुढतमरहस्यं किञ्चित्पद्यमयम् इति न तादृशेन सन्तोषः समेषाम्, एतत्तु तद्वैपरीत्येन सर्वथा सकलोपादेयतामासादयितुमर्हतीति–

१–९–५२ } न्याय–व्याकरणाचार्य–प. कृष्णदेव शास्त्री
(दरभंगा–बसैठ–चानपुरा)

## ग्रन्थ सहायक सज्जनों की शुभ नामावली

| | |
|---|---|
| २०१) शेठ कीरचंद वाघजीभाई | राजकोट । |
| २०१) तम्बोली फुलचन्द पुरुषोत्तमदासभाई ( ह. बाबूलालभाई ) | जामनगर । |
| २०१) संघवी पोपटलाल दामोदरभाई | राजकोट । |
| १२५) शाह त्रिकमलाल वृजलालभाई घडियाली | सुरेन्द्रनगर । |
| १०१) श्री महावीर जैन लोज ( ह. दोसी मगनलाल पानाचन्द ) | जामनगर । |
| १०१) दोसी जेटालाल पानाचन्दभाई की धर्मपत्नी वृजकुंवरबेन | राजकोट । |
| १०१) श्री जैन तपागच्छ श्राविकासंघ | राजकोट । |
| ५१) शा. जगजीवनदास शौभाग्यचन्द (ह. मनसुखलाल, जग, शाह. मेडिकल स्टोर राजकोट) | धोराजी । |
| ५१) एक सद्गृहस्थ-पाटणवाला | राजकोट । |
| २५) शेठ दुलर्भजी हरखचन्द बी. ए. एल. एल. बी. प्रमुख जैन तपागच्छ संघ | राजकोट । |
| २५) शा. शिवलाल भुदरजीभाई ( मुनीम जैन तपागच्छ संघ राजकोट ) | वढवाणसिटी । |
| २५) शा. नेणसीभाई रतनसीभाई की धर्मपत्नी रलियातबेन | राजकोट । |
| २५) शा. प्रभाशंकर सुंदरजीभाई | राजकोट । |
| २५) शा. बेचरदास खेतसीभाई | वडाल । |

श्री तपागच्छनायक–अकब्बर–प्रतिबोधक–जगद्गुरु

# हीरचारित्रम् ॥

श्रीमत्तीर्थंकरेषु सत्सु चरमो नित्योऽमरोऽजोऽजरः–
कैवल्यं गत ईश्वरोऽत्र भगवान् श्रीवीतरागप्रभुः ।
ससारोदधिमग्नमन्दमनसां नृणां सुपोतो महान्,
यः सर्वज्ञजिनेश्वरः प्रतिपल वीराय तस्मै नमः ॥ १ ॥

इन्दुकुन्दतुषाराभा वीणापुस्तकरञ्जिता ।
भारती भावनागम्या वाचि मे भातु जाड्यहा ॥ २ ॥

यः मेऽज्ञानतमो विनाश्य हृदये ज्ञानप्रदीपम्परम्,
सस्नेहं चलमन्दिरे सकरुणं प्रज्वाल्य निष्कण्टकम् ।
सन्मार्गन्ननु दर्शयत्यनुदिनन्तापत्रयोन्मूलकं,
तस्मै श्रीगुरवे नमः सुमनसा भूयस्त्रिकालन्नमः ॥ ३ ॥

श्चित्तमिदमेवास्ति–यदेकस्मिन्मन्दिरे पार्श्वनाथप्रभोर्मूर्ति संस्थाप्य यावज्जीवनन्तदर्चनमिति । राजा च तदादिष्ट वचः श्रुत्वा झटिति प्रह्लादनविहारनामकश्चैत्य विरच्य्य पार्श्वनाथमूर्तिस्थापनङ्कारयामास । तत आरभ्य प्रत्यहं सपर्य्यायामासक्तस्य तस्य देदीप्यमानः कायाकल्प इव काय आविर्बभूव । नागरिकाश्च सर्वे आबालवृद्धास्तदीयालौकिकचमत्कृतिम्पश्यन्तो विश्वस्तास्तद्देव दर्शनकांक्षिणो भक्तिपूजापराङ्मुखा अपि बभूवुः ।

तत्र प्रह्लादन(पालन)पत्तने दयादाक्षिण्यादिगुणोपेतो दानिजनमुकुटालङ्कारोऽतिधनाढ्यः श्रीमानुपकेशवशभूषणः कुराशाहनामकः श्रेष्ठी प्रतिवसति स्म । तस्य सुशीला पातिव्रत्यपरायणा नाथीनाम्नी लक्ष्मीव गृहलक्ष्मी । सा चैकदा प्रभूतभाग्योदयाद् गर्भं धारयन्ती रात्रेश्चतुर्थप्रहरे पद्माकरे स्वेच्छया परिभ्रमन्तं दिग्गजेन्द्रं, क्षणादूर्ध्वं हीरामाणिक्यराशिञ्च पश्यन्ती स्वप्ने, ततः प्रबुद्धा वेपमानहृदया स्वामिनं व्याजहार–नाथ ! रात्रेश्चतुर्थप्रहरे स्वाप्निकं दिग्गजेन्द्रहीरादर्शन माङ्गलिकमुताहोऽमाङ्गलिकमिति चेखिद्यते चेतः, तदत्र देव एव प्रमाणम् ।

नाथीनाथः श्रावं श्रावन्तदीयम्वचः शुभप्रदम्पुलकिताङ्गो गद्गदस्वरेण प्रत्युत्तरमयच्छत्–प्रिये नात्र कार्य्यो भीलेशस्त्वया । स्वप्नोऽयं महामाङ्गलिकः, दैवज्ञादिष्टेन हीरानिभः सकलजनाह्लादकः कश्चिदात्मजः सम्भवितेति । पतिव्रता सा प्रियोक्तम्प्रियम्वचः शृण्वन्ती शुभाशावल्लीं मनोरथजलेनाप्लावयन्ती यापयन्ती च शुभसमयं गर्भं पुपोष ।

अथैवं समायाते रामद्विपेषुचन्द्रमिते( १५८३ ) विक्रमवर्षे–आग्रहायणिकस्यार्जुने दुर्गेन्दुवासरे प्राच्यान्दिशि शोभमाने

॥ ३ ॥

दिनभर्तुः विकुलकिरणजाले, गवाक्षविवरेभ्यो मन्दिराणामभ्यन्तरे प्रविष्टे, सरसिजवनकान्तं लोकलोचनानन्ददर्शनशक्तेर्निदानं किरणसहस्रन्दधाने, निखिलजगदाक्रान्तमन्तमन्धकारं दूरीकुर्वति, निशायां कमलबन्धनवासानां षट्पदानां बन्धनमोक्षं सहस्र-मयूखैः, कमलानां सहस्रदलानां विघटनं, कुमुदवनं शोभाविहीनं, चक्रवाकं प्रीतिमन्तम्, पेचकम्प्रीतिहीनञ्च कुर्वति-उदयति बाल-सवितरि, विकसितकमलगन्धैर्भृङ्गमालां मोदयति मन्दंमन्दम्प्रवहति मारुते, गहनम्पुरुषार्थजातं विचारयति योगिजने, स्वाध्याया-वृत्तिं गुरोरभ्यासे विदधत्यन्तेवासिनि व्यापारमापणे जिगमिषति व्यापारिजने, नूतनमृदुलबालतृणमास्वादयितुमभिलषति गोगजाश्वमहिषीगर्दभादिपशुगणे, नानादिग्देशपरिभ्रमणकामनया प्रोल्लसितस्वान्ते मधुरकूजनेनार्कोदयं सूचयति पक्षिनिवहे, कर्ण-विवरविदारककटुशब्दोच्चारयन्त्यां कलहप्रियायां कुट्टिन्याम, कस्याश्चिच-" सुप्ते पश्चाच्च या शेते, पूर्वमेव प्रबुध्यते । नान्यं कामयते चित्ते, सा स्त्री ज्ञेया पतिव्रता ॥ १ ॥ " इति स्मरणात् पश्चात्सुप्तायामपि पूर्वमेव जागरितायाम्प्राणेशादेशानुरक्ताया-म्पतिव्रतायां सत्याम्प्रातः शुभमुहूर्ते नाथीदेवी सकललक्षणलक्षितं सुतमसूत ॥

कन्दर्पोपमं सुन्दरं बालं भूयो भूयो दृश दर्शञ्जननीप्रसवव्यथालेशमपि न गणयति मानसे । अभितो गेहम्प्रमदाजनाः प्रसूतदर्शनेच्छया सूतिकासद्मनि देदीप्यमानं बालं विलोकयन्तश्चिरायुष्मान् भव सौम्येति शुभाशीर्वचं उदीरयन्तः समयोचितगानं गायन्तो ग्रामाद्बहिर्गतन्तञ्जनकम्परितोऽन्वेषयामासुः । तदानीमेव ममायान्तं कुमाराहं दासीपुत्रास्सोदन्तमवगच्छन्तं जयध्वनिं कुर्वाणा गायकगणा नगरवासिनो हितचिन्तकाः सहृदयहृदयास्सुहृद्वर्गाः सभ्याश्च प्रमुदितमानसाश्चक्रुः ।

नयनानन्दकरप्रसूर्यांत्रे सकलशरीराङ्गोपयोगि विविधालङ्कारनूतनबहुमूल्यदुकूलकञ्चुकमदुत्तरीयवसनन्दत्वा नीवीं राजतद्रव्यैः परिपूर्य च वोपथामास।

श्रेष्ठी च मुहूर्ते शुभे विलोलालकं बालकन्दृष्ट्वा प्रसन्नाननो लीलावाण्डपण्डितानाहूय दविष्ठानपि सम्बन्धिवर्गान्, जन्मोत्सवं कारयन् याचकेभ्यो ददानो दानन्देवार्चनामारेभे। तत्रश्चैकादशेऽह्नि पिता नाम कुर्यादिति स्मृत्या त्रिकालज्ञदैवज्ञं विप्रमाहूय सद्रव्यश्रीफलं समर्पयन् जन्माङ्गचक्रनिर्माणाय सादरम्प्रार्थयामास।

ततो ज्योतिर्विदस्तदीयलग्नं विमृश्य कृत्वा नक्षत्रानुसारि "हीराचन्द" नाम समुपस्थितजनान्तिके फलश्रुतिं श्रावयामासुः।

पितरौ च तदीयौ स्वमानुकूलनाम श्रुत्वा परमानन्दञ्जग्मतुः। लग्नानुसारि फलं कर्णकुहरमोदकं निर्मलचेतसां, श्रोत्रविवरविदारकं दुर्धियाञ्जातकोन्नायकञ्च परितो देशम्प्रसृतम्। शिशुरसौ हीराचन्द्रः शुक्लपक्षीयहिमांशुरिव वर्धमानो बाल्यक्रीडां खेलन् धूल्यामङ्गुल्यग्रेण किमपि लिखन् घुणाक्षरन्यायेनेनाक्षरविन्यासे, कर्णाकर्णितया श्रुतप्रतिक्रमणगाथोच्चारणे च स्वतः पटुतामभ्युगच्छन् नगरजनप्रशस्यो बभूव।

अनुक्रमात्समागते वयसि पञ्चमे च साकं छात्रगणेन धार्मिकविद्यालयेऽपि गच्छन् कृतनमस्कारस्तत्राध्ययनाध्यापनश्रवणेनाभ्यस्त नवस्मरण–जीवविचार–नवतत्त्वाद्यनेकग्रन्थप्रतिपाद्यविषयो विद्यार्थिगणगणनाग्रगण्यः पाठकप्रियः कुमारोऽधीयानो भाष्यं नववयस्को जात। अस्मिन्नेव समये विनयसम्पन्नोऽनन्यसक्तोऽनलसस्त्यक्ताहम्मदो वैराग्यबीजमभ्युगच्छन् विद्यागुणनिष्णातो दशलक्षणलक्षितश्च सञ्जातः।

॥ ५ ॥

उक्तञ्च–नान्योद्योगवता न चाप्रवसता नात्मानमुत्कर्षता, नालस्योपहतेन चामयवता नाचार्य्यविद्वेषिणा ।
लज्जाशीलविलाससुन्दरमुखीं सीमन्तिनीं नेच्छता, लोके ख्यातिकरः सतामभिमतो विद्यागुणः प्राप्यते ॥ १ ॥
अपि च–अक्रोधवैराग्यजितेन्द्रियत्वं, क्षमा दया सर्वजनप्रियत्वम् । निर्लोभदाता भयशोकमुक्ता, ज्ञानप्रबोधे दश लक्षणानि ॥२॥

एकदा सशिष्योपशिष्यस्तपागच्छाधिपतिर्जैनाचार्य्यश्रीमद्विजयदानसूरीश्वरः पर्य्यटन् पालनपुराभिध नगरमासाद्य जनान्तिके धर्म्मोपाख्यानं मधुरगिरा प्रारब्धवान् । तथाहि–भो भो भव्यलोकाः ! असारेऽस्मिन् संसारे नहि कोऽपि जनः सुखी, केचिद् व्याधिग्रहग्रस्ताः, केचिन्नीरोगिणो धनधान्यादिरहिताः, केचित्पुत्रकलत्रादिरहिताः, केचिन्नीरोगिणो लब्धप्राज्यराज्यपुत्रपौत्रकलत्रादयोऽपि ततोऽप्यधिकतृष्णया अशान्ता एव पर्य्यवतिष्ठन्ते । शरीरमिदं क्षणभङ्गुरं मलमूत्रपुरीषायतनम्, मुखं श्लेष्मागारम्, स्तनौ मांसग्रन्थी, जघनञ्च स्रवन् मूत्रक्लिन्नम्, तथापि–" खेलत्खञ्जननयना परिणतबिम्बाधरापृथुश्रोणी, कमलमुकुलस्तनीयं पूर्णेन्दुमुखी सुखाय मे भविता । " इत्याद्यनुरञ्जनसंज्ञया स्त्रीशरीरेण प्रीतिङ्कुर्व्वन्तो जनाः पिशाचादप्यधिका नीचा भवन्ति । यतो हि–चर्म्मनिर्मितपेशीयं मांसासृक्पूयपूरिता । अस्यां रज्यति यो मूढः पिशाचः कस्ततोऽधिकः ॥ श्रीमतां श्रीस्तडिद्वच्चञ्चला सलिलबुद्बुदसमाना नहि कस्यचिद् गेहेऽनारतन्तिष्ठति, यावच्च यत्र तिष्ठति सा तावत्तत्र मदमतङ्गजोऽपि प्रायस्तिष्ठत्येव । वसुधाया आधिपत्यं, विषयोपभोगः, प्राणाश्च न जात्वपि परलोकसहायकाः, अपितु धर्म एव तत्र तथाभूतः । तदुक्तम्–छायाभ्रविभ्रममिदं वसुधाधिपत्य–मापातमात्रमधुरं विषयोपभोगः । प्राणास्तृणाग्रजलबिन्दुसमा नराणां, धर्मः सखा परमहो परलोकयाने ॥ १ ॥ किमधिकं

मम: ?। प्राणा इव प्रिया भार्य्या न सार्धम्पत्र गच्छति, अलमलन्तया सङ्गः नचापि देह एव तथा, असत्य–स्तेय–छद्मप्रपञ्चोपार्जिता लक्ष्मीः स्वयमप्यसुखाना भूम्यामेव याति, केवलं धर्म एव सहायः । तदुक्तम्–धनानि भूमौ पशवश्च गोष्ठे, नारी गृहद्वारि जनः श्मशाने । देहश्चितायाम्परलोकमार्गे, धर्म्मानुगो गच्छति जीव एकः ॥१॥ एवञ्च मनन कृत्वा कामिनीकाञ्चनशरीरादौ मोहम्परित्यज्य भूमिरात्मसहायको धर्म्मोऽनुष्ठेय इति ॥

तत्र समायाते मित्रसमेते हीराचन्दे तदीयभविष्णुतया मुग्धो गुरुपादो देशनावसरे भूयोभूयो दृष्टिम्पातयन् तत्समुत्कण्ठितमना बभूव । उपदेशानन्तरम्पृष्टागारिगणमुखात्–श्रेष्ठिकुराशाहात्मजो हीराचन्द इति श्रुत्वा तदीयानगारित्वमुद्दिश्य भिक्षार्थं गतस्तत्र तत्र, पितरौ तदीयौ स्वाशयन्दर्शयित्वा ताभ्यामनुत्तरं लभमान उपाश्रयमाययौ । अपरेऽह्नि श्रीसंघाभियाचिता नाथी मनिनयमवोचत्, शिशुरसौ भागवत एव नास्मदीयः, यदि च तस्योदयस्तथाविधः स्यात्तदा प्रतिरोद्धुं कः शक्नुयात्, स्वयमेवागारित्वं ग्रहीष्यति, कथमहं स्वयमेवाबोधबालन्ददामि, अत्र भवन्त एव विचारयन्तु । ततः श्रीपुज्यमुखारविन्दतः श्रुतसकलवृत्तान्तो गुरुजनस्तत्र बाले संलग्नमना अपि प्राणिनां हितमिच्छन्नुपदिशन् धर्म्मकथा ग्रामान्तरं जगाम। ततः क्रमाद्व्यतीते कस्मिंश्चित्समयेऽकाण्ड एव तदीयौ पितरौ दिवौकसा समाहूतौ सूनुमसहायं हित्वा भूतले गच्छन्तौ स्वर्गं पालनपुरनाम नगरं स्वात्मना शून्यञ्चक्रतुः । ततोऽल्पीयसा कालेन मातापितृभ्यां विहीनः स वैराग्यमयीं भावनां भावयन् भ्रमयंस्ततः कियद्दिनानन्तरम्–अणहिलपुरपाटणे भगिनीपतिगेहे सत्कृतस्ताभ्यां कियन्ति दिनानि व्यतीयाय ।

॥ ७ ॥

एकदा नियतियोगात्तत्रैव पुर्यामाचार्यदेशो विजयदानसूरिगुरुर्वैराग्यमयीं देशनाम्प्रारेभे । अये धर्मरसिका भावुकाः ! विदितमेतदस्ति श्रीमतान्तत्रभवतां यदिह जगतीतले सकला अपि सुखमेवेहन्ते न दुःखमिति । तच्च सुखम्पारलौकिकमैहिकञ्च द्विविधम्, तत्रैहिकं सुखं मधुविषसम्पृक्तान्नमिवाभोग्यम्, अतस्तमेव समीहन्ते विवेकिनः, पारलौकिकसुखञ्च ऋते धर्म्मान्न भवति, नहि कारणेन विना कार्यं किञ्चिदपि जायते, यथा घटादिकार्य्यं विना मृदादिना त्रैकाल्यासिद्धम् । धर्मश्च–तत्त्वार्थाधिगमसूत्रे–उत्तमः क्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिञ्चनब्रह्मचर्याणि धर्मः । यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति न्यायविदः । उक्तञ्च–

व्यसनशतगतानां क्लेशरोगातुराणाम्, मरणभयहतानां दुःखशोकार्दितानाम् ।
जगति बहुविधानां व्याकुलानाञ्जनानाम्, शरणमशरणानां नित्यमेको हि धर्म्मः ॥ १ ॥

किं बहुना ? ऐहिकमपि सुखं स्रक्चन्दनपुत्रकलत्रादिजन्यं धर्मं विना परमसम्भवम् । यथाहि—

त्रिवर्गसंसाधनमन्तरेण, पशोरिवायुर्विफलं नरस्य ।
तत्रापि धर्मं प्रवरं वदन्ति, न तद्विना यद् भवतोऽर्थकामौ ॥ १ ॥

किञ्च–यः प्राप्य दुष्प्राप्यमिदं नरत्वं, धर्मं न यत्नेन करोति मूढः ।
क्लेशप्रबन्धेन स लब्धमब्धौ, चिन्तामणिम्पातयति प्रमादात् ॥ २ ॥

॥ ९ ॥ वस्तुतः–सुखकारिणोभूतस्य धर्मस्यात्रसराभावात् सुखन्दुर्लभम् ।

यतो हि–आयुर्वर्षशत नृणाम्परिमित रात्रौतदर्धं गतं,
तस्यार्धस्य परस्य चाधर्मपर बालत्ववृद्धत्वयोः ।
शेष व्याधिवियोगदुःखकलित चायुः परिक्षीयते,
जीव वारितरङ्गचञ्चलमहो ! सौख्यं कुतः प्राणिनाम् ? ॥ ३ ॥

तस्मात्–यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतः,
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्,
सदीप्ते भवने तु कूपखननम्प्रत्युद्यमः कीदृशः ? ॥ ४ ॥

अपि च–अनित्यानि शरीराणि, विभवो नैव शाश्वतः ।
नित्य सन्निहितो मृत्युः, कर्तव्यो धर्मसङ्ग्रहः ॥ ५ ॥

धर्मसञ्चयश्च त्यागिनां सुकरो भवति, गृहस्थाना मूर्च्छावशात् काठिन्येन जायते । त्यागश्च गोगवयगजवाजिमहिष्यादिपशुधना-
नाम्, काञ्चीकाञ्चनमणिमुक्तारौप्यादिद्रव्याणाम्, पुत्रपौत्रकलत्रादि कुटुम्बानाम् एवंविधानां साकल्येन त्यागे सति मूर्च्छाया ॥ ९ ॥

अत्यन्ताभावेन परिशुद्धभावोदयात् धर्मङ्कुर्वाणा 'जना आत्यन्तिकं ( मोक्ष )सुखं लभमानाः संसृतिसागरस्यापरम्पारं द्रागेवावगच्छन्ति । तस्मान्मोहम्परित्यजद्भिर्विवेकिपुरुषैः प्रथमं परमसुखनिदानन्त्यागः कार्य्यः । सद्भावनेयञ्च कार्य्या ।

सर्वे च सुखिनः सन्तु, सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु, मा कश्चिद्दुःखभाग्भवेत् ॥ १ ॥

इति । श्रोतृगणेन साकं समागतो हीराचन्द एकाग्रचित्तः शृण्वन् सर्वं संसारमसारञ्जानानः कृतदीक्षासंकल्पो वैराग्यमयीं शेमुषीं प्रापत् । उक्तञ्च—सहायास्तादृशा एव व्यवसायोऽपि तादृशः । मतिरुत्पद्यते तादृग् यादृशी भवितव्यता ॥ १ ॥

ततः स निकटे विमलाभगिन्याः समागत्य स्वाशयन्दर्शयन् दीक्षार्थम्प्रार्थयामास । हे स्वसः ! हतभाग्यस्य मे जननीजनकौ सोदरश्च त्वमेवासि साम्प्रतम् । आदेशो भवत्याः सर्वत्रोपेक्षितः, विनाज्ञां भावत्कीन श्रेयसे कोऽपि मार्गः, गुरूपदिष्टम्वचः श्रुत्वा बहुशो मननं कृतम्मया, अथ न रोचते मह्यं दीक्षातिरिक्तामपि वार्त्ताम्, भागवती दीक्षैव सर्वकल्याणकारिणी । उक्तञ्च कैश्चित्—

दीक्षामोहविनाशिका च सततं भव्योदयप्रापिका,
दीक्षा पूज्यतमा समस्तभुवने जीवात्मनाम्पाविका ।
दीक्षा श्रीजिनसेविता च दलनी दुःखस्य शिक्षामयी,
तां वै स्वीकुरुत प्रमोदजननीं लोकाब्धिनावं जनाः ॥ १ ॥

तस्मान्मयैवास्या दीक्षा ग्रहीतव्याऽस्ति मया, अतस्तदर्थं दीयतामादेशः सत्वरम् ॥ ततः सरलहृदया भगिनी संसाराद्विरक्त मोहं परिहरन्ती शृण्वन्ती च तदीयम्वचः सबाष्पनयना गद्गद्स्वरेण प्रत्युक्तवती—वत्स! निजजनकस्य प्राणप्रियस्त्वम्, त्वयि दीक्षिते रक्षस्वे कुतो यास्यति? कथमल्पशरीरस्त्वमिदानीं दीक्षानियमं पालयेत्?। दीक्षाया विविधाः कठिनसाध्यनियमाः। दीक्षितो जनः कचलुञ्चनं करोति, भिक्षार्थं प्रतिगृहं याति, नीरसमाहारञ्च भुङ्क्ते। रात्रौ पानीयमपि न पिपासति। शिरीषशून्यशिर उपानद्विहीनपादश्च भ्रमणो नारोहति कस्मिन्नपि याने। कामिनीकाञ्चनादेः स्पर्शनमपि न चिकीर्षति। एवंविधं द्वाविंशत् परिसहं पालयति साधुजनः। अस्येव तीक्ष्णा दीक्षा नाल्पवयस्कैः शक्या परिपालयितुम्। हे सरलहृदयबन्धो! न हि तावकं शरीरन्तथाविधं वरीवर्त्ति, येन कठिनतमतपस्यां शक्नुयाः। अवस्थाते वैवाहिकी सौख्यं समीहते न च दीक्षाम्। अधुना पुत्रप्रयोजना भार्या समपेक्षिताऽस्ति। पश्चात् स्वरूपमनुरूपा विचारणा कार्या इति ॥

ततस्तदुदीरितं वचः शृण्वन् वैराग्यमानसो हीरो गुरुगिरा प्रत्येकं खण्डयति—भगिनी! आदेशो भवत्याः शिरो धार्यमेव, किन्तु लोकानाम्प्रवृत्तिस्तथैव बोभूयते यथेष्टं दरीदृश्यते। अनिष्टे वस्तुनि निवृत्तिरेव, नच प्रवृत्तिः। अस्मन्मते सर्वं खल्विदं विषयजालमनिष्टं वर्त्तते। जन्यजनकभावः पतिपत्नीभावश्च सम्बन्धो लौकिकः। अलौकिकसम्बन्ध ऐश्वरः। वंशोन्नतिश्च त्यागितनयेन शोभिता। न च जात्वपि दुर्व्यवसायिसूनुभिः। साधुजनानां सुखं दुःखं समनियतमेव। उक्तञ्च—

क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनम्,
क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः।
क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो,
मनस्वी कार्य्यार्थी गणयति न दुःखं न च सुखम् ॥ १ ॥

यच्चोक्तम् शिरीषादिविहीनस्त्यागी तदप्यकिञ्चित्करम्, भूषणैर्न विभूष्यन्ते लोकाः, अपितु गुणैः, विवेकशालिनां सदसत्पदार्थ ज्ञानं गुणः। विषयोपभोगे च रोगशोकदुःखदारिद्र्यादीनां महद् भयम्प्रतिभाति। तदुक्तम् ।

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयम्,
माने दैन्यभयं बले रिपुभयं रूपे जराया भयम् ।
शास्त्रे वादिभयं गुणे खलभयं काये कृतान्ताद्भयम्,
सर्व्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ १ ॥

तथाविधस्त्याग एव तादृशोऽस्ति यत्र भीर्लेशोऽपि नास्ति ।

उक्तञ्च—न च राजभयन्न च चौरभयम् इहलोकहितम्परलोकसुखम् ।
नरदेवनतं वरकीर्तिकरं श्रमणत्वमिदं रमणीयतरम् ॥ १ ॥

॥ १३ ॥

अतः सर्वं विमृश्य प्रतिपत्तिर्न कार्या भवत्या । देहि मे दीक्षार्थमनुवचनम्, क्षमस्वापराधं मामकीनम्, व्यपनय मत्तो मोहम्,
मा मुञ्चाश्रुजालम्, अनुमन्यस्व हर्षाधिक्यम् । स्वीकुरु ममान्तिमप्रणामम्, यामि गुरुदेवशरणम् । इत्युक्त्वा गुरुवर्यदानसूरिपदोपान्ते
गत्वा सविनयम्प्रोवाच-हे भक्तवत्सलगुरुदेव ! त्रायस्व त्रायस्व मामनन्यशरणम् । देहि दीक्षां दीनाय, न ह्यत्र रोचते क्षणमात्रमपि
दीक्षां विना । सर्वमिदं भोगसाधनं भुजङ्गायितम् । विमृष्टं मया भवदुपदिष्टम् । सम्भूतोऽहमनुमत्या भगिन्याः । तदतिरिक्ताभि-
भावकशून्योऽयमात्मा । दासस्तेऽनुग्राह्योऽयं बाल इत्युदीर्य विरराम ॥

सूरिचक्रेशो गुरुस्तमानतं रागारञ्जितं मत्वा मिद्धमिष्टं मन्वानः–श्रीपूज्यानुमत्या तत्प्रार्थनामूरीचक्रे । बालश्च भावि-
दीक्षः प्रसन्नाननो मनोरथरथं सञ्चालयन् वर्धयंश्च वैराग्यमयीं भावनां गुरुसेवापरायणो बभूव । श्रीसङ्घश्च दीक्षार्थिनं सबहुमानं
सत्करोति । दीक्षायै निपतस्थानं सज्जयति, आमन्त्रयति सज्जनान् । आरभते च चतुःषष्टिप्रकारीं जिनेश्वरपूजाम् । ततो
रसाङ्कबाणभूमिमिते ( १५९६ ) विक्रमवर्षे मार्गशीर्षसितद्वितीयायान्तिथौ गुरुदेवः शुभावलोकितसमये दीक्षान्दत्त्वा तस्मै हीर-
हर्षनाम्ना सम्बोध्य चारित्र्यरक्षार्थमुपदिदेश । ततः स भागवतीं दीक्षां गृहीत्वा प्रसन्नाननः गुरुचरणकमलयोः करशिरः–
संयोगानुकूलव्यापारात्मकनमस्कुर्वन् रत्नत्रयमाराधयमानः सविनयं गुरुपदसेवापरायणश्छायेवानुवर्तमानो धार्मिकग्रन्थेन व्या-
कृतिकाव्यकोशानधीयानो गुरुप्रियो बभूव । ततोऽल्पीयसा कालेन कर्कशतर्कशैवादिशास्त्रमपि पठिपन् गुरोरनुमत्या दक्षिण-
देशीयदेवगिर्यां धर्मसागरादिचतुर्भिः सतीर्थ्यैः सह जङ्गमीति । तत्राभीप्सितशास्त्राध्ययनं सम्पाद्य माननीयाध्यापकगुरुगरीयान्

॥ १२ ॥

सबहुमानं सत्कृत्य तदादेशेन निजाचार्य्यचरणदेशाभिमुखी बभूव । ततो लब्धवाञ्छितविद्यो गुर्जरमरुधरीयप्रसिद्धतीर्थात् परावर्तमानं नारदपुरीं वर्तमानं श्रीचरणकमलयुगलं सम्प्राप्य सानुनयमष्टोत्तरशतकाव्यमुखेन ववन्दे । तद्विरचितधारावाहिकगुरुस्तुतिं शृण्वन्तो जना हर्षातिशयमापुः । उक्तञ्च—"शिष्यरत्नस्य प्राप्तौ हि हर्ष उत्कर्षभाग् भवेत्" इति । शिष्याणामियती योग्यता गुरुकृपयैव बोभूयते । विषयेऽस्मिन्निदर्शनं श्रूयते, तद्यथा—सत्यकामजाबालो विद्यामध्येतुं हारिद्रुमतमाचार्यवर्य्यमुपेयिवान् । आचार्यपादश्च तमुपनीय चतुःशतं गा दत्वाऽऽज्ञापयामास । इमा गाश्चारय विपिनम् । यावच्च—अमुष्याः संख्यासहस्रं न स्यात् तावन्मागमः । बालः—सत्यकामो गुरुचरणादेशपालनं विधाय कियता कालेन तावत्या गवा सार्धं गुरुसमीपमाययौ । तदानीन्तदीयन्तेजःपुञ्जमवलोक्य गुरुरप्यवादीत् 'ब्रह्म विदिव वै सौम्य ! भाति को नु त्वानुशशास' । सत्यकामस्त्वमेवासि बभाषे विनयान्वितः" इति । तथैवाचार्य दानसूरिपादानामसीमकरुणया हीरहर्षोऽपि नानाशास्त्रे पटुतामवाप ।

ततो जनागम–व्याकरण–काव्य–कोश–न्याय–शैवादिशास्त्राणान्तरज्ञं हीरहर्षज्ञानानः सूरिपादस्तत्रैव नारदपुर्यामिश्वाकाशरसेन्दुसम्वत्सरे (१६०७) ऋषभदेवसान्निध्ये पण्डित(पन्यास)पदं वस्वाकाशरसेन्दु(१६०८) वर्षे च उपाध्यायपदन्दत्वा भव्यजीवानुपदेष्टुमना मरुधरान्तः पात्येनकपुरम्पर्यभ्रमीत् । ततो दिनानुदिनन्तस्योपाध्यायस्य वर्धमानप्रतिभातिशयन्निरीक्ष्यमाणः सूरिमन्त्राराधनपूर्वकं श्रीचरणः श्रीसमुदयानुरोधात् सिरोहिपत्तने खेन्दुरसेन्दु (१६१०)वर्षे सूरिपदेन तमलञ्चकार । हीरविजयसूरिनाम चाकार्षीत् ।

आचार्यविरुदमहोत्सवश्च विख्यातराणकपुरमन्दिरस्य निर्मापयितुर्धरणाशाहंगशजस्य दुधाराज्ञो मन्त्रिणो चाङ्गासंघपतिना कृतः । राज्ञा च तद्दिने समस्तराजधान्यामहिंसादेवीमर्चयित्वा प्रतिमास दशम्यान्तिथौ अमारिः प्रवर्तिता । शासनसम्राट् सूरिराजो हीरसूरिस्पाटणनगरे चतुर्मासीकर्तुमादिश्य स्वयं सूरतबन्दरनाम नगरं ययौ ।

एकदा कोडिमतनयो 'जयसिंह' नामक शिशुर्नारदपुरी नगरो भवोदस्तपितृवदनुकरणशीलो मातुलमद्य वमन् वैराग्यमयीं गारमकथा कथयन् दीक्षार्थमम्बाम् प्रार्थयामास, माता चैकाकिनम्बालं मुमुक्षायाः प्रच्छन्नाग्नितेजसा दह्यमानं दुराग्रहञ्च तदीयं पश्यन्ती संसाराद्विरक्ता सती स्वयश्चापि दीक्षाग्रहणेच्छया साकं शिशुना गुरुवर्यदानसूरिपादान्तिके गत्वा सविनयं स्वाभिप्रायमाचख्यौ ।

ततः शिशोर्मविष्णुतामनुमीय प्रसन्नवदनः श्रीपादः रामेन्दुरसेन्दु(१६१३)सम्वत्सरे साम्बशिशवे दीक्षा दत्वा जयविमलाभिधमवयस्कन्तं जैनसिद्धान्तपयोधिश्रेण्यामवतारयितुमारेभे । अचिरकालेन चर्चितप्रतिक्रमणभाष्यान्तमप्रतिमप्रतिभाविभासितन्तञ्जयाख्यं न्यायाध्यापनेच्छया हीरसूरिचरणौ सेवितुमाज्ञापयामास । जयविमलः श्रीचरणादेशेन सतीर्थ्यवरहीरसूरिचरणसरोरुहमुपेत्य सप्रश्रय कृतनतिततिः सूरिपृष्टकुशलोदन्तोत्तरन्दित्सुः सनम्र साञ्जलि प्रोवाच । श्रीमन्तः! अस्ति कुशलं श्रीमतामनुकम्पया, न जातुजातम्पथि कष्टमपि । गुरुदेवस्ते शिवेच्छुः सदैवास्ते । गुरुपादादिष्टोऽहमत्रभवतां भजितु चरणौ शरणमुपस्थितः । इति सरलमृदुगिरा सन्तोषयन् श्रीचरणान् तच्छायाश्रितो बभूव ।

॥ २५ ॥

इतः सुरताद्विहरन्तो गुरुदेवश्रीहीरपादा मङ्गलहृदयक्षेत्रं धर्मांकुरैः परिपूरयन्तो 'वडाली' पुरीमागच्छन्तोऽज्ञातायुःशेषाश्चन्द्रदिवाकरनिभौ हीरजयाख्यौ स्मरन्तः परमपदङ्गमिषवः समाधिस्थाश्चन्द्रबाहुरसेन्दु (१६२१) हायने सुरनिकेतनातिथयो बभूवुः। ततः शोकसागरनिमग्ना मनुजा विलपन्तोऽन्त्येष्टिक्रियां कुर्वन्तश्चिरस्मारकस्तूपे पादुकास्थापनपूर्वकं खेदव्यपनोदकामनया हीरमानसा बभूवुः।

विजयहीरसूरिश्च गुरुनिधनवृत्तज्ञः सन्ततमनाश्रेखिद्यमानो रहसि क्षपायां विललाप। हा देव! क्व गतस्त्वम्, अकाण्डे-एव मामनाथीकृत्य परोक्षो जातः। अहो! हा हन्त! अन्ते श्रीपदानां सेवां नाकार्षम्, नापि तदानीममीयूषवचनमश्रौषम्, न च कैवल्यपथपथिक श्रीपदाब्जमद्राक्षम्, न वा प्रष्टव्यमप्राक्षम्, धन्यास्ते महात्मानो धन्याश्च नगरनरनार्यो येनात्मनाऽमोघशुभाशिराश्रयो लब्धाः, धन्यश्च तत्स्थानम् यत्र श्रीदेवेन वपुस्त्यक्तम्, तीर्थायितन्तदधुनापि द्रष्टव्यम्। हे गुरो! स्वाप्निकमपि दर्शनं श्रेमत्कं सकलसन्तापहारि मनोवाञ्छितपूरकं यथासमयन्नूतमपेक्षितम्, देहि दर्शनन्निबिडतिमिरावृतमानसाय ज्ञानलवदुर्विदग्धायमह्यमिति विलपति सत्यधीरे हीरे स्वर्गादवतीर्य इव श्रीपादो देवकल्पस्तं व्याजहार। हीर! कृते तवाधीरता नोचिता, यतो हि-अविवेकिनामधैर्यमनुपश्चात्तापश्च बोभूयते। भवांश्च लब्धविद्यः, तस्मान्मा चिन्तां कार्षीः। आत्मशरीरयोः कीदृक्सम्बन्ध इति विवेचनीयश्च। आत्मा अजरोऽमरो नित्यश्च शरीरोऽनित्यः, तयोरात्यन्तिकसम्बन्धविच्छेदायैव योगिजनः कतिपयाज्जननादुद्यतते। आत्मशरीरयोः सम्बन्धस्यास्थिरत्वन्निनतमेव। यतो हि "जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च" इति त्वं हि चिन्तासागरमग्नो

॥ १७ ॥ मा भव। अचिरमेव प्रजापालकमुकुटो भवितासि। अखण्डभवनकीर्तिसे परित संभारम्भपरितेति गिरा ज्योतिर्मयः परोक्षो जातः।

ततस्त्यक्तसन्तापो हीरसूरिः प्रतिक्षणं गुरुचरणसरोज ध्यायं ध्यायन्नित्यनैमित्तिककार्यसंलग्नमानसो बभूव।

अथैवमुपागच्छगगनमण्डले हीरसूरिवर्य्ये द्वितीयेन्दुमिव समुदितमवलोकयन्तो लोकाः कोका इव प्रमुदिताः परमकुतूहलतया सविनयं कृताभिवादनाः सगद्गदम्प्रार्थयामासुः। सूरिपाद! अथ जगत्याः प्रकाशस्तवाधीनः, नहि त्वदृतेऽज्ञानतमो मे विनंक्ष्यति, अस्माकं हृदयक्षेत्रे श्रीमद्गुरुदानदेशनाबीजस्य ज्ञानाङ्कुरोत्पत्तिपयय एव पूज्यपादो देवलोकमुपानिशत्। अथ श्रीमत्सदुपदेशसुधासिञ्चनाज्ज्ञानतरुः फलिष्यति, नान्यथेति भूयो भूयः प्रार्थना मे। किमधिकंब्रूमः। विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्" इति।

अथ भविकोक्तवचसः " क्रियाकेवलमुत्तरम् " सस्थाप्य चेतसि गभीराम्बिना धीरेण हीरेण सदुपदेशवृष्ट्या शिवप्रसूनक्षेत्रपूरणाय दत्तमानसेन बभूवे।

एकदा विहरन् हीरविजयः सूरिमन्त्राराधनकामनया डीसापुरीमुपेत्य तत्रत्यश्रावकगणस्यास्तिकत्वं गुरुजनप्रियत्वञ्च दर्शं दर्शम् श्रमणादीनामध्यापनं योगोद्वाहन व्याख्यानादिकञ्च समस्त कार्यं जयविमले विन्यस्य स्वयंत्रैमासिकसूरिमन्त्रजपे बद्धपरिकरो बभूव।

अतीते कियद्दिवसे सूरिमन्त्राधिष्ठायकदेवस्तन्द्रावस्थितं त व्याजहार। हे तपस्विन्! अधुना तपश्चर्यामाचर त्वम्, भवत्संकल्पतन्नूनं सफलीभूत भविष्यति। जयविमलस्ते पटुतरः सर्वं सम्पादयिष्यति, तदर्थं मा चिन्ता कार्षीः। इत्युक्त्वा गते तस्मिन् तदनुगातन्द्रापि तदीया। ॥ १७ ॥

अनतिकाले स्वेष्टदेवस्य प्रशमनाया निदानमिदमेवासीत, यदयम्परमगुरुचरणभक्त आसीत्। एकदा तदन्तिके गुरुदानसूरिकरकमलकलितदलं झटित्यागमनसूचकं समागतम्। तद्दृष्ट्वैव षष्ठव्रतपारणामविधाय श्रीसंघाग्रहश्चोल्लङ्घ्य द्रुतं विहारं कृत्वा गुरुचरणसेवायामुपस्थितः। तदीयागमनन्निरीक्ष्य श्रीचरणा अपि क्षुब्धास्सन्तस्सहर्षं शुभाशीर्ददुः।

कियद्दिनानन्तरं समुज्झितध्यानः सूरिराजो हीरपादो निजान्तेवासिनं जयविमलाभिधं शिष्यजनाग्रगण्यं स्वपट्टे समुपवेशयितुमिच्छन्–तदनुमोदकस्य चतुर्विधसंघस्य तत्पुरीपावनार्थमाग्रहमस्वीकृत्य ततो विहारश्चकार।

जयविमलो मुनिर्गुरोरधीयानः कर्मग्रन्थतत्त्वज्ञो व्याकरणशास्त्रस्यानेकग्रन्थान् पठन् काव्यानुशासन–काव्यप्रकाश–वाग्भट्टालङ्कार–काव्यकल्पलता–छन्दानुशासन–वृहद्रत्नाकरादेश्च तत्त्वज्ञानानः स्याद्वादरत्नाकर–अनेकान्तजयपताका–रत्नाकरावतारिका–प्रमाणमीमांसा न्यायावतार–स्याद्वादकलिका–सम्मतितर्कादिजैनन्यायग्रन्थाध्ययनपूर्वकं तत्त्वचिन्तामणि–किरणावली–प्रशस्तपाद–भाष्यादि प्राच्यन्यायाध्ययनेना प्रतिमप्रतिभा विभावितो बभूव।

सशिष्यः सूरिराजोऽनेकनरम्पर्यटन् स्तम्भतीर्थमुपाजगाम। तत्रत्यश्रीसङ्घो गुरोः प्रतिचरणन्यासं मुद्रिकाद्वयं रुप्यकैकश्च संस्थापयन् मौक्तिकस्य स्वस्तिकं कुर्वन् श्रीचरणरजः शिरस्युद्वहन् स्वागतमकार्षीत्। भक्ताश्च प्रभावनाशां कोट्यात्मकस्य राजतद्रव्यस्य वितरणं कृत्वा सकलजनप्रशस्या बभूवुः। तदुपलक्षे च तत्रत्यैका पूनीनाम्नी श्राविका बहुद्रव्यव्ययपूर्वकं श्रीजिनेश्वरदेवप्रतिबिम्बप्रतिष्ठां कारितवती।

एकदा तत्रत्यनागरिका जयविमलस्य विदुषः पाण्डित्यमलौकिकम्पश्यन्त आचार्य्यदेवान् प्रार्थयामासुः—हे गुरो ! अस्माकमभिलापा हार्दिकी नितरां जागर्ति, यदयं जयविमलः सकलशास्त्रमधीतवान् पण्डितत्वमप्यस्मिन्नागतम् । अथ श्रीमत्करकमलकलिता पदवी, अवशिष्टास्ति, पूरणीया सा सदयहृदयैः, इति 'इष्ट वैद्योपदिष्टन्न्यायेन जनतन्त्राणामौत्सुक्यं दृष्ट्वा तदीयन्वचः शुत्वा तदुरीकृत्य च रसबाहुरसेन्दौ ( १६२६ )तपस्यस्य सिते पक्षे दशम्यान्तिथौ श्रीपुञ्जसमेतः श्रीपादः पण्डितपदप्रदानपूर्वक सकलमनोरथसिद्धिश्चकार । ततो विहरता सान्तेवासिसूरिणाऽमदावादोपकण्ठेऽहमदपुरनामकपत्तनस्य शाखापुरम्प्राप्य चतुर्मासी कृता ।

एकदा रात्रौ सन्थारापोरिसीम्पाठयित्वा किमपि चिन्तयन्तं तंद्रालुमधिष्ठायकदेवः प्रत्यभाषीत । हे सूरीश ! अथ स्वस्थाने जयविमलं नियोज्य चिन्ताराक्षसीं दूरमप्सारय। यतो हि 'चिता चिन्ता समाख्याता चिता तत्र गरीयसी' चिता दहति निर्जीवं चिन्ता दहति जीवकम्' इति । अल्पीयसा कालेन बुधशिरोमणिस्तेऽपरदिवाकरो भविता इत्युदीरित देववचः शृण्वन् त्यक्ततन्द्रः सूरीशः प्रसन्नमनाः स्वान्तेवासिनं भावयन्–तत वाचक–पण्डित–गीतार्थ–साधुगणाना श्रीसंघस्य च प्रार्थनामाचार्य्यविरुदप्रदानात्मिकां स्वीकुर्वन् स्वेष्ट सस्मार। ततस्तदनुमत्याऽऽचार्यपदस्याष्टाह्निकमहोत्सवः प्रारब्धः । तत्रोत्सवे श्रेष्ठी मूलचन्द्राभिधो जिनचैत्य–जिनाचेन–गुरुभक्ति–ज्ञानप्रभावना–स्वामिवात्सल्यादेरमोघफल जिनागमैः प्रतिपादितं मत्वा, सोत्साह शत्रुञ्जयतीर्थस्य ऋषभदेवमन्दिरस्य दक्षिणपश्चिमदिशाया चैत्यनिर्माणमिव जिनार्चनादौ लक्ष्म्याः सदुपयोगं दानशाला अपि कुर्वन् 'कीर्तिर्यस्य स जीवति' इति स्वस्मिन्नमरत्वमवाप ।

ततो द्विपबाहुरसेन्दु(१६२८) वर्षे फाल्गुनशुक्लसप्तम्यां सोपाध्यायमाचार्यपदेन सत्रा जयविमलो विजयसेनसूरिनाम्ना विभूषितः । तदानीमेव पद्मसागरलब्धिसागरौ पण्डितपदेन विमलहर्ष उपाध्यायेन च विभूषितः । उत्सवेऽस्मिन् समागतसज्जना रूप्यकैकेन वाचकवर्गाश्च द्रव्यवसनादिना सत्कृताः । अथैतज्जैनजनानाम्बरे नभसि गुरुशिष्यौ आचार्यपादौ चन्द्रदिवाकराविव बभूवतुः ॥

एकदा लुंकागच्छाधिपतिर्मेघजीनामा लुम्पुगणस्य आगमे मूर्तिपूजाया उल्लेखमवलोकयन् संकल्पविकल्पमना भूमण्डलेऽद्वितीयं सूरिपादं गुर्जरावनौ विहरन्तमवज्ञाय तदन्तिकमुपागत्य तत्रत्यसंशयं निराकृत्य गुरुकल्पन्तमात्मनामन्वानः संवेगिदीक्षार्थम्प्रार्थयामास । गुरुश्रीरपि विद्याविवेकविनयसम्पन्नं ज्ञात्वा तन्निवेदनमङ्गीकृत्य दीक्षादानपूर्वकं तदुद्योतविजयनामाकार्षीत् । तत्सहैव सप्तविंशतिमुनिराजं संवेगिक्षेत्रेऽवतारयामास । एकस्मिन् समयेऽहमदावादाद्विहरन् सूरिपादः आचार्योपाध्यायपण्डितसाधु-समन्वितनिजगुरुपादाभिवादनानन्तरं श्रीसंघस्य बहुलाग्रहं मन्यमानः अणहिल्लपुरपाटणे चतुर्मासीं कुर्वन् हितोपदेशेन तत्रत्यजन-हृदयामोदवल्लीमेधायमानः सति चातुर्मासपूर्णे खरामरसेन्दु(१६३०) वर्षे पौषकृष्णचतुर्दश्यान्तिथौ विजयसेनसूरिशिष्यं सायणा-वारणाचोयणा परिचोयणापूर्वकं गच्छैश्वर्यसाम्राज्यशासनोपरि समासीनं कुर्वन् तदामुनाऽविच्छिन्नः सम्बन्धो भूयादित्याशीर्गिरा नैज-भारं लघुचकार । अवसरेऽस्मिन् मरुधर–मालव–मेदपाट सौराष्ट्र–वाणारसि–कच्छ–कोकणादिजनपदानां लोकाः सादरं सविनयं सबहुमानञ्च तमनुमोदयामासुः । विजयसेनसूरिमहोत्सवे राज्ञः प्रमुखमन्त्री हेमराजाख्यो विपुलद्रव्यव्ययेनाखण्डयशो लब्धवान् ।

तदानीं कलाखानाभिधस्तत्रत्यसुबेदारपदधारी आसील्लोकानामपकर्ताऽप्रियोऽन्यायकर्ता च । स च हीरसूरिमहाराजस्यानुपमं विसारिधवलयशः श्रुत्वा कर्णचक्षुषोर्विवादमपरिहर्तुकामः सूरिवरानानेतुं दूतमेव प्राहिणोत् । सूरिचरणा अपि तदाह्वानं स्वेष्टसाधनं मत्वा तदन्तिकमुपाययुः । समागते तस्मिन् कलाखानः सादरं नत्वा च कुशलवार्ताऽनन्तरं सूर्यचन्द्रयोः क उपरिष्टादिति पप्रच्छ । श्रीपादास्तदौद्धत्यं दृष्ट्वा सूर्यादुपरि चन्द्र इत्युत्तरं ददुः । कलाखानः-महाराज ! सूर्यस्योपरि स्थितिरेव, कथं भवता चन्द्रस्योच्यते इति । सूरीशः-राजन् ! नाहं सर्वज्ञो न च तत्र आगतोऽस्मि । किन्तु सर्वज्ञानुसारि शास्त्रप्रतिपादितं प्रतिपाद्यते, भवता च कपोलकल्पितमित्येव महत्प्रमाणम् । अतः परं जिज्ञास्यते चेत्तदपि वक्ष्यामि । कलाखानः-योगिराज ! अतो न जिज्ञासाऽस्ति, धन्यस्त्वम् धन्या च तावकी प्रतिभा, अथ क्षन्तव्यो मेऽपराधः । अपरञ्च त्वदुत्तरेण सन्तुष्टोऽहं निवेदयाम्यर्थितिरियं यत् मामभ्येत्य मत्तो याचय किमपि मद्योग्यमिति । सूरीशः-नरेन्द्र ! यद्येष आग्रहस्ते तदा शृणु मदीयमावश्यकमङ्गीकुरु । संसारे राज्ञो राजपत्निसमानाश्च प्रजा आत्मजनिमा निश्चप्रचम् । यतो हि-अन्नदाता भयत्राता यश्च विद्यां प्रयच्छति, जन्मदातोपनेता च पञ्चैते पितरः स्मृताः ॥१॥ एवम् । राज्ञः पत्नी गुरोः पत्नी मित्रपत्नी तथैव च । पत्नीमाता स्वमाता च पञ्चैता मातरः स्मृताः ” इति स्मरणात् पञ्चविधा मातरः पितरश्च शास्त्रे निगदिताः । एवञ्च त्वमपि प्रजानां पिता सिद्धः तथा पितृज्ञानो युक्तोऽसि । तथा च पराक्रमस्ते भूयान् वर्धिष्यति, रेतोऽवरोधे शूरत्वं वीरत्वञ्च स्वतोऽनायासेन समायास्यति । न च कस्मादपि बिभेति, यथा कानने पञ्चास्यस्याग्रेऽत्र प्राणिनाञ्चेतो दोदूयते, शीलव्रतादादरः पूजां यशो जयञ्च प्राप्नोति, सोऽद्रिमिव दारिद्र्यादिदुःखानि निरं निरस्यति, सरस्वती च तज्जिह्वां न जहाति, तेषा

स्वचनमनृतं न भवति, प्रत्युक्तम्वचः सफलीभूतं भवत्येव देवा अपि प्रशंसन्ति तम्, अन्ते च कैवल्यशिखरश्रेणीमारोहति सः, तस्माद्-द्यारभ्य पराङ्गनाननं भावान्तरेण मा पश्य। किञ्च कारागारनिवासिनं मुञ्च इति याञ्चाद्वयं सविधे भगवतः। कथाख्यानः तथास्तु इति भणित्वा सविनयं कृताञ्जलिः सूरिचरणानुगो बभूव।

एकदा विजयसेनसूरेः सकलकलायां निष्णाततां गच्छोद्योतकताञ्च मञ्जानन् हीरगुरुस्सकलं विमृश्य पृथग्विहर्त्तुमादिदेश। हे सेनसूरे! प्रतिभावे पृथग्विहारेणातिविकस्वरा भविता, अतो हायनेऽस्मिन् पृथग्विहर। सेनसूरि-पूज्यपादाः! यथाऽऽज्ञापयन्ति भवन्तः। ततः शुभमुहूर्त्ते निजमानसे श्रीचरणमरालं विन्यस्य निजसतीर्थ्यैः सार्कं देशाटनञ्चकार। ततः परिभ्रमता सेनाचार्येण चम्पानेरनगरमुपेत्य तत्रत्य जयवन्तनामकश्रेष्ठिवर्य्यप्रार्थनया बाहुरामरसभू(१६३२) वर्षे तज्जिनालयाधिष्ठितजिनेश्वरप्रतिकृती-नामञ्जनशलाकां कृत्वा ततो विहरता सूरतबन्दरं गतः। तत्रत्यलोकानां स्वागतं स्वीकुर्वता तत्प्रार्थनया चतुर्मास्यां मनोहारिणीं देशनाम्प्रारिप्सितुमिच्छता तत्तन्मनोकामना सम्पूरिता। ततोऽल्पीयसा कालेन तद्दिगन्तरालकीर्तिज्वालया दग्ध एको भूषणाभिधो दिगम्बर आचार्यपादात् शास्त्रार्थकर्तुमुद्यतो बभूव। आचार्यचरणेनापि तमाहूय पक्षद्वयस्य माननीयविदुषः प्रतिनिधित्वे प्रति-ज्ञाहान्यादिहेत्वाभासदोषेण प्रत्येकम्वचः खण्डयता निगृहीतः सदिगम्बरः स्याद्वादानुयायि गुणिजनहास्यास्पदो जातः। विजय-पताकामुत्तोलयताचार्य्यपादेन सत्तर्कज्ञेन गुर्जर-मालव-मरुधर-मेदपाटादिदेशान् पावयता सरला जीवाः कतिपयाः प्रतिबोधिताश्च।

एकदा प्रातःकाले भारतवर्षपुरन्दरः श्रीमदकब्बरसाहिः-फतेपुरशिकर्य्याः साहिप्रासादे समासीनो राजमार्गोपरि दृष्टि-

ग्पातयन् विचित्रां लीलामकरयन्नासीत् । स च माहिर्महान् हिंसकः अन्यायप्रियश्चासीत् । प्रत्यूष एवास्य कृते पञ्चाशत् पक्षिणा जिह्वाशन नियतमासीत्, कामवासनायाः केन्द्रस्थानमयम्; सुस्तनीनां कुरङ्गीदृगाम्बलादपहरणं मुख्यं कार्य्यमासीत् । पतिव्रतानां सतीत्वापहरणाय सतत यतमानमानस आस्ते स्म । अमुना सार्धं कोऽपि क्षत्रियः क्षण योद्धुं न क्षमते स्म । सर्वे चास्याज्ञापरायणा आसन् । दशाननस्येवास्य पराक्रमो जाज्वल्यमानः प्रतिपलं वर्धिष्णुर्लोकासहिष्णुरासीत् । मन्त्रीषु—अन्यतमटोडरमल्लाभिधश्छायेव तस्यानुक्षणं राजमानः । तदालोकनावसर एव तेन पथा राजप्रासादनिकटवर्तिना महानेकः समारोहो निर्गतः । यत्रैका शिबिका नानाविधसज्जितासीत् । तत्र हीरगुरोर्जय इति जयध्वनिना गगनमण्डलम्पूरयन्त, अमरपाता आबालवृद्धा हीरस्तुतिं कुर्वन्त आसन् । तद्यथा—

जय जय हीर ! जयाशुससूदन ! जय सारद ! जय सूरे ! ।
जय वीरेश्वरजिनपदचातक ! जय शरणीकृतसूरे ! ॥ १ ॥

हर मम सुखद ! विभो ! करुणाकर ! दैनिककल्मषभारम् ।
मामनुकम्पय दीनमनाथ कुरु भवसागरपारम् ॥ २ ॥

श्रीगुरुदानपदाब्जमधुव्रत ! दर्शय पदमभिरामम् ।
शासननायकधर्मधुरन्धर ! पूरय मानस कामम् ॥ ३ ॥

अपराधम्मे विषहर ! पारिहर वन्दे विमलं चरणम् ।
आत्मारामसुरमणे करुणारुवणालय ! भव शरणम् ॥ ४ ॥

कुरु कुरु सदयं मम हृदि भगवन् ! गुरुवर ! हीर ! निवासम् ।
भक्तजनप्रिय ! नाथीनन्दन ! मामुद्धर निजदासम् ॥ ५ ॥

दूरं गमय दुराशयचेतो-लघिमाहेत्वभिमानम् ।
दिशि दिशि भातुतरामिह भारत-भावुकभासुरमानम् ॥ ६ ॥

जय जैनागमविपिनहरीश्वर ! हितमादिश शिवपन्थानम् ।
मानवताप्रतिकूलसुधारक ! कलयन्त्वय मन्यानम् ॥ ७ ॥

जय जैनाञ्जन ! शमयनिकेतन ! अपनय भवभयमोहम् ।
सूरिहिमाचलवन्दित ! नन्दित ! भव्यानन ! तव दासोऽहम् ॥ ८ ॥

इमां देवसुधां मत्वा भक्त्या गायाति यो नरः ।
तस्य सर्वार्थं संसिद्धिन्ददाति जगतां गुरुः ॥ ९ ॥

इति श्रीमदकब्बरो महाध्वनिं श्रावं श्रावं चकितचेता निकटवर्तिटोडरमल्लं याथातथ्योत्तरन्दातुमिङ्गितवान् । तच्छ्रुत्वैव टोडरमल्लः सविनयम्व्याजहार । स्वामिन् ! समारोहोऽयञ्जैनधर्म्मावलम्बिनाम् । यत्र शिबिकायामासीना चम्पानाम्नी तपस्विन्येका, सा च पाड्मासिकन्तप आराधितवती । तपस्यायाममुष्यां जलपानातिरिक्त नहि किमपि भुक्ते, जलपानमपि दिवामात्रम्, पञ्चमोऽयं मासस्तपसः । अद्यतनं गमनञ्चैविशेषमधिकृत्य चैत्यनन्दनार्थम् इति । भूमण्डलाधिपः साहिश्रीमदकब्बरः सर्वमुदन्तं श्रुत्वा निराहारपाड्मासिके तपसि अविश्वस्तः प्रतारणात्मकञ्चचस्तदीयं मनसि जानन् कोपसंरक्तनयनः द्रागेव शिबिकामुपरिष्टादानेतुमनुचरमालप्य समारोहे कुलिशम्पपात । तत आगतायान्तस्यास्तेजसा देदीप्यमानान्तन्वीन्ताम्परीक्षार्थमेकस्मिन् वेश्मनि संस्थाप्य दूतीद्वतौ चान्तर्बहिर्दिनचर्य्यायाः गवेषणार्थं नियुज्य परीक्षामारभत । रात्रिन्दिवं देवगुरुनाम रटन्त्यास्तस्याः कार्य्यजालं दैनिकं दूतीद्वयाभ्यां मुखान्मासं श्रुत्वा साहिरेकदा तदन्तिके स्वयमागत्य तामब्रवीत् । भद्रे ! किमर्थम् कठिनन्तपोऽदस्त्वमाचरसि ? किन्ते कष्टम्, किम्वा मनसि वर्तते कथमदस्तपः सम्पन्नं भवति, सर्वं याथातथ्यमेव ब्रूहि, नोचेदितो गमनं दुर्लभञ्जानीहि, प्रत्युतदण्डञ्चाप्स्यसि । मितभाषिणी सा साहिप्रोक्तम्वचः शृण्वन्ती प्राह—हे नरेन्द्र ! राज्ये तव वसन्त्या नहि किमपि कष्टम्, किञ्च छायेव तव पार्श्वे विराजमानो थानसिंहनामा ममात्मजोऽनुक्षणं सेवायान्दत्तदृष्टिः । न ह्यस्ति मानसे मे किञ्चिदपि यन्निवेद्यम्, आत्मकल्याणनिमित्तमेवादस्तप आचर्य्यते । यो हि जनः संसारमसारञ्जानीते जन्ममरणप्रबन्धविच्छेदञ्च समीहते, स एव आत्मकल्याणाभिलाषुरत्र वर्तते । तपसः समाप्तौ निदानञ्च वीतरागजिनेश्वरदेवानां, तपोमूर्तिगुरुवरश्री-

॥ २५ ॥

मद्विजयहीरसूरिचरणकमलानां कृपा । नातः परं किमपि वेद्मि । तत्सत्यञ्जानीहि । भवांश्च भूपेन्द्रो दीनानां नाथः, प्रजानां माता पिता च, किन्त्वत्तो गोप्यमस्तीति ॥ अकब्बरसाहिस्तदीयां मृदुलां गिरं शृण्वन् तस्यामनवद्यतां ज्ञात्वा थानसिंहाख्यां देवावलोकने प्रतिबन्धकत्वजन्यापराधक्षमां याचमानः सप्रसन्नं स्वर्णमयीं चूडाभूषान्ददानस्तस्यै सादरं समारोहेण सह तान्निजावासं सम्प्रेष्य तदुक्तहीरसूरिमहाराजानां गवेषणार्थं दूतमालप्य सूरीणां ज्ञानन्तप आचारं विद्यां स्वभावं प्रजावात्सल्यं धर्मस्नेहादिविशेषञ्च ज्ञातुं थानसिंहमाहूय इति मादखानकथित 'गुर्जरावथवे हीरसूरिपर्यटने समाहूतहुंकृत्या निश्चितं विहरणं ज्ञात्वा एकस्मिन् दले "जैनाचार्यश्रीमद्विजयहीरसूरिमहाराजं सादरं सविनयं सबहुमानं शीघ्रं मदन्तिके प्रेषयेति रदित्वा मोदीकमालनामानौ निजकर्मचारिणौ, अमदावादीय-न्यायाधीश शाह अहमदखाँमहोदयसविधेऽप्रैषीत् । न्यायाधीशोऽपि तत्करकमलकलितदलम्प्राप्य त्वरितमेव तत्रत्यप्रधानश्रावकन्तदीयम्वचः श्रावयित्वा साग्रहं तमानेतुमाज्ञां दत्तवान् । श्रावका अपि न्यायाधीशादेशन्तत्पत्रञ्चादाय मोदीकमालौ पुरस्कृत्य गान्धारनगरञ्जग्मुः । यत्र सूरिराजमुखाद्धर्मदेशना भागीरथी वहति स्म। सविधे तस्य गते पत्रप्रसूनं करपुटाञ्जलौ समर्प्य 'भूमण्डलाधीशस्य प्रतिबोधे जगताम्प्रतिबोधः सम्भाव्यते इत्यभ्यर्थना मे फतेपुरगमनायेति सविनयन्निवेदयामासुः । गुरवोऽपि तद्दलेन, तत्प्रार्थितविषये कृत्वा बहुशो मीमांसामाततायिनां सम्राजाम्प्रतिबोधे लाभातिशयो नूनं भवितेति स्वान्ते विमृश्य श्रीसङ्घनिवेदनं स्वीकृत्य वसुरामरसेन्दु( १६३८ ) वर्षे मार्गशीर्षासितसप्तम्यान्तिथौ शुभलग्नोदये ततो विहारञ्चक्रुः ।

ततः सप्तावकान्तेवासि सूरिपादा वटदलादि प्रतिनगरदिशा सम्भावमागत्य हितोपदेशबीज प्रभविष्णुमरसजनहृदय-क्षेत्रे वपन्तोऽमदावादस्यान्वर्थतां चिकीर्षया तत्रागुः । शाहबुदीनन्यायाधीशोऽपि सूरीणामागमनं विज्ञाय सादर साहिप्रासादे तमाहूय सविनयमवादीत् । हे सूरिवर ! सूरनिभन्ते तेजः पराक्रमी मे भूपेन्द्रः श्रुत्वा भवद्दर्शनेच्छुरिति समाहूतो भवान्नभीरुः सत्वत्र यातु सत्वरं मदर्पितरत्नञ्च स्वीकुरुतात् । गमने तत्र भवतां लाभो मानं ख्यातिश्च भविता, तथा चेन्मदुन्नतिश्च स्यादिति । ततः सूरिदेवेनोक्तम् राजन् ! मामेवं वद, साधवो हि गतस्पृहा भवन्ति, सुखन्दुःखञ्च तुल्यं गणयन्ति, तेषां कृते शत्रुमित्रे समाने, मानापमाने च तुल्ये, प्राणिमात्रेषु धीरेका, प्रतिपलञ्च जीवानां सुखमेव समीहन्ते न दुःखम्, तच्च सुखम् पारलौकिकम् येन न पुनरावर्तते, प्राणिहिताय रात्रौ न भुञ्जते, पानीयञ्चोष्णमेव पिबन्ति कामिनीकाञ्चनादेः स्पर्शमपि न कुर्वन्ति, धर्माचरणनिमित्तमुपदेशः शाश्वतन्तेषाम् अतो न हि कस्यचिल्लोभोऽस्माकम्, स्वामी ते भूपतिः प्रतिबोद्धव्यो ननु, येन सर्वा हि प्रजाः सुखशान्तिद्वार द्रक्ष्यन्ति इति । शाहबुदीनस्तत्त्यागे मीमांसाविशय कुर्वन् साश्चर्यं सविनयं महता समारोहेण तं सूरिसम्राज नियतोपाश्रयमप्रापीत् । सूरीशोऽमदावादं कियन्तिदिनानि स्थित्वा ततो मोदीकमालाभ्यां राजकर्मचारिभ्यां साकं फतेपुरस्य प्रस्थानमचीकरत् । पथ्यागते पट्टनाख्यपत्तने सूरिसतीर्थ्यो बुधकुलकुमुददिवाकर–उपाध्यायवर्यं श्रीधर्मसागरः ससाधुर्विजयसेनसूरिपार्श्वे नीत्वा ग्रामाद् बहिरागत्य सविधिवन्दनानन्तरं कुशलमप्राक्षीत् । तदुपलक्षे श्रीसंघेन ससमारोह साधुसूरिचक्रवर्तिनो नगरमानीय महानुत्सवः कृतः । तदवसरे श्राविकैका सूरीशकरकमलात्प्रतिमाः कियत्यः प्रतिष्ठाप्य सकलजनप्रशस्या बभूव । सूरिपादाश्च सम-

दिनानि स्थापयित्वा वयोवृद्धश्रीमद्धर्मसागरन्तत्रैव स्थातुमादिश्य सार्कं सेनसूरिणा सिद्धपुरन्तत्र आगत्य कुमारसकोपकर्त्तारं शान्तिचन्द्राभिधं बुधवरं निजोपकण्ठे स्थातुमाज्ञप्य विजयसेनसूरिमग्रतःकृत्य राजेन्द्रसमीपे–श्रीमदुपाध्यायवर्य–विमलहर्षगणिम्पुरा प्रेषयामास। स्वयञ्च जरावस्थया शनैः शनैः सरोत्तानगरमागत्य तदधीशठक्कुरोपनामकार्जुनकृतस्वागतमूरीकृत्य मांसाशनसुरापानपराङ्गनोपगमनाखेटकादिकुव्यसनेभ्यस्तं बहिष्कृत्य परमपूताऽऽबूपर्वतस्थजिनेश्वरप्रमोदेर्शनं कृत्वा यथासमयं सिरोहिराज्याधिपतेः सुल्तानसिंहस्य मनोमुकुलं विकासयन्तः राणकपुरतीर्थयात्रानन्तरं सुप्रसिद्धाऽऽऊआदिनगरमटन्तः मेडतापुरीमाजग्मुः। दर्शनार्थमागतकल्याणविजयोपाध्यायो गुरुशुभाशिराशिना सन्तुष्टस्ततः परावृत्य साड्डीनगरीमलञ्चकार। गुरूणामागमनिमित्त तल्हाश्रेष्ठी समागन्तुकान् रूप्यैकदानेन सत्कृत्य श्रियः सदुपयोगञ्चकार। अथेत प्रतिग्रामम्पर्यटन्तः श्रीगुरुचरणाः सांगानेरपुरमागत्य पुरागतोपाध्यायकृतसविधिवन्दनामूरीचक्रुः।

अकब्बरसाहिना विमलोपाध्यायमुखारविन्दतः सांगानेरमुपागमनं सूरिगुरोः शृण्वता द्रागेव थानसिंहऽमीपाऊमानुशाहादिवणिजो महता समारोहेण तानानेतुमाज्ञप्ताः। ततः कृतसमारोहेण राजकर्मचारिणा साडम्बरं नानावाद्यविशेषध्वनिना गगनम्पूरयता सान्तेवासिसूरिशिरोमणि हीरगुरुम्पुरस्कुर्वता गन्छवाहोपनामकजगमालप्रासादे दिनैकं विश्रामङ्कारयता अङ्करामरसेन्दु(१६३९) सम्वत्सरे ज्येष्ठकृष्णत्रयोदश्यां भृगुवासरे फतेपुरराजधानीमागतः। तदानीं श्रीचरणानुगाः सिद्धान्तशिरोमणिमहोपाध्यायश्रीविमलगणयः, पण्डितसहजसागरगणयः अष्टोत्तरशतावधानि–नरेशमनोरञ्जकश्रीशान्तिचन्द्रगणयः, हीरसौभाग्यकाव्यकर्त्तारो गुरवः

श्रीसिद्धिविमलगणयः, कवित्वकलानिष्णाताः-विजयप्रशस्तिमहाकाव्यरचयितारः सुविशोहेमविजयगणयः, वैयाकरणचूडामणिजुवरर-लाभविजयगणयः, पण्डितराजा गणितग्रंथोत्तनविजयराजयश्च त्रयोदशसंख्यकाः शिष्याग्रगण्याः, सकलप्रश्नोत्तरदानदक्षा आसन्।

ततो द्वितीयेऽह्नि प्रातः समागतो राजमन्त्रिशिष्यः सूरिगुरुरिति थानसिंहमुखाच्छ्रुत्वा साहिस्तत्स्वागतार्थम् परीक्षणार्थञ्च पटुतमकम्बूलकतलं सम्भ्रेण कूटनीतिश्रेणीमारुरोह। साहिमुखाच्छृण्वन्नेव शेखः स प्राथमिकपरीक्षार्थम्पर्यङ्कस्याधस्तात्कुर्विगो-मनामेकां संस्थाप्य पटाच्छादिते तस्मिन्नुपवेशनार्थम्प्रार्थयामास। ततस्तद्दोषां कृतिं योगमुद्रया जानन् योगिराट् पर्यङ्क-स्याग्रः प्रदेशे त्रयो जीवा इत्युपवेशनानर्होऽयमित्युक्त्वा विरराम। ततः स्वकीये मानसे परामृशति शेखः-अहो! कथमनेनोच्यते-एकजीवस्थाने त्रयो जीवा इति, अवलोकयामस्तावत् ततस्तत्र गत्वा प्रच्छादनं, युगलात्मजप्रसवां निरीक्ष्य नूनमयं कर्णपिशा-चोपासकः द्वितीयाम्परीक्षाङ्कर्तुमारब्धवान्। तथाहि-गगनमण्डले स्वकीयोष्णीषमुड्डीयमानं कृत्वा सूरिम्प्रोवाच। हे सूरे! अस्म-दीय उष्णीषः केन नीतः, तदानयितुम्प्रभवन्त्यार्याः, योगिना-कृते नहि किमप्यशक्यम्। इति शेखमुखोदीरितवचो निखिलमाकर्ण्य सूरिराजो ध्यानेन विदिततत्कृत्यस्त्वरितमेव प्रक्षिप्तनिजरजोहरणस्य कुण्डेन ताड्यमानं तदीयोष्णीषं तदन्तिके समुपस्थापितवान्। ततस्तदीययौगिकयोग्यतामालोकयतामयं महात्माऽलौकिकीयोग्यतामासादितवान् परमचमत्कारीति निश्चिन्वतां सन्तुष्टचेतसां शेखादीनां सानन्द मतिमपश्च भूयोभूयः प्रार्थनया निजकम्बलासने न्यषीदत्। ततः पारस्परिकालापसंलापे प्राप्तपटुत्वस्य शेखस्याग्रहेण फणाभिधस्य राज्ञः प्रासादे विश्रामालये भिक्षाशनन्तदपि नीरसमेकवारमिति दिशागोचरीग्रहणाय तत आजगाम। अपरेऽह्नि शेख-

॥ २९

मुखाद्विदितवृत्तेन साहिना समाहूतः सूरिवरस्तन्निर्दिष्ट पूर्वाच्छादितासनस्याधःप्रदेशे सति जीवे तस्य मृत्युरित्यनाचारोऽयमित्ययुक्तमासनमिदं साधोरित्युदीर्य्य तटस्थो बभूव । साहिश्रीमदकब्बरोऽपि तदाकर्ण्य तदीया गीः सत्याऽसत्या वेति तदासनन्निःसार्य्य पश्यति कियन्तो जीवा इति, ततस्त्वरितमेव बहुमूल्यकं रत्नरञ्जितं मञ्चन्निर्दिश्योपवेशनाय प्रार्थनां कुर्वन् द्वितीयाम्परीक्षामारभते । सूरिवरश्च तदाशयं ज्ञात्वा सदुत्तरम्प्रयच्छति-हे राजेन्द्र ! कामिनीकाञ्चनस्पर्शस्यापि निषेधोऽस्माकं जैनागमसिद्धान्ते, किम्पुनरुपवेशनम् अलन्तवायासेन बहुना । आसनम्मे स्कन्धोपरि सदातनं वर्वर्त्ति, तत्रास्यतेऽस्माभिः । एवं तदुपविष्टे साहिरपि तदीयामलौकिकचमत्कृतिं स्वान्तेऽवधार्य्य स्वयञ्चोपविश्य च जरात्वे भवतां महत्कष्टन्दत्तम्मयेतिक्षंतव्यो भवद्भिर्दयासागरैरिति साञ्जलि जगाद । साहिसूनवोऽपि सलीम-मुराद-दानियालाभिधा नतमस्तकाः सन्तः अन्योन्यवार्तालापश्रवणे स्वासनमलञ्चक्रुः । अनन्तरं थानसिंहेन श्रेष्ठिना गुरवः पृष्टाः पूज्यवर गुरुदेव ! महत्कष्टं भवद्भिरनुभूतम्, यतो हि अवस्था ते वृद्धा प्रतिभाति, तत्रापि पद्भ्यामेवागमनम्, अस्ति कुशलन्ते नु ततस्तदीयोक्तिं शृण्वन्नेव साहिः शाहबुद्दीने क्रुद्धः प्रत्यवोचत् । अहो ! एतेषां कृतेऽस्मदावादन्यायाधीशसविधे पत्रन्दत्तम् पुरा, यथार्थं कष्टन्न गृह्णीयात् तथानुष्ठेयन्तत्रत्यैः, परन्तु सुचारुप्रबन्धो न कृतः कैश्चिदिति पद्भ्यामेवागमनमेतेषामिति । तदाकर्ण्य सूरिपादः-राजेन्द्र ! तेन भाग्यशालिनाऽनुष्ठितं सर्वम् परन्तु जैनश्रमणानां कस्मिंश्चिदपि याने निषिद्धमारोहणम् इति पद्भ्यामेवानुकूल आगमः शिवा मे पन्थानश्च । तदुक्तञ्च श्रुत्वा थानसिंहम्प्राह-साहिः । अहो ! वणिजानेन नाहमुक्तः कदाचित् यदयं महात्मा गुरुर्मे तादृगिति । अस्तु तावत् । अथ साहेरुत्कण्ठाशान्त्यर्थ सूरिवर्यहीर-

गुरोरशन-वसनादि नियमं वक्ति समासतो मोदिः । हे महीन्द्र ! महात्मासौ उपानद्भ्यामृतेनैव प्रचलति सर्वदा, नहि कस्मिंश्चिदपि याने समारोहति, स्वीयञ्च वस्तु जात स्वीयस्कन्धाभ्यामुद्वहति, उष्णीषशून्यशिराः-सदैवास्ते, एषां कचलुञ्चनञ्च प्रतिवर्षं वारद्वयन्नियतम् । किञ्च—

न स्नानं न विलेपन च कुरुते भिक्षाशन नीरसम् ।
पानीयञ्च सदुष्णमेव पिबति प्रेम्णा सदा प्राणिनाम् ।
रात्रौ नैव सुसेवते च किमपि प्राणात्ययेऽपि क्षणम् ।
भैषज्य वसुकामिनीश्च सदयो रागादिशून्यः सदा ॥ १ ॥

इति तदुक्तमवचः कमालाभिधेन कर्मचारिणानुमोदितं श्रुत्वा क्षितिपतिमाहिना भूयोभूयः प्रशंसितः सूरिराजो नैत्यिकानुष्ठानाय यथास्थानमलङ्कृतवान् ॥

अथ द्वितीयेऽह्नि साहिश्रीमदकब्बरः श्रीमदुपाध्याय-शान्तिचन्द्राद्गोष्ठीं कर्तुमन्यानाहूय स्वयं चित्रशालां गत्वा सूरिम्प्रति-अर्हदीश्वरयोर्भेदः क इति प्रश्नञ्चकार । सूरिवरः-मृदुलया गिरा प्रत्युत्तरम्प्रयच्छति-राजेन्द्र ! ये केचिन्महापुरुषा वीतरागा विशिष्टात्मानस्तेषा भेदात्यन्ताभावः, नाम्ना भेदोऽपि चित्तवृत्तीनां वैचित्र्यमधिकृत्य । परिणामे च तेजःपुञ्जमात्रम् यथा एको हि बालः माता पित्रा नागरिकेण वा-अपरापरनाम्नाऽऽहूतस्तच्छरीरावच्छिन्न एवात्माऽवगम्यते, नापरस्तथैव

॥ ३१ ॥

तत्तन्नाम्नोच्चारितः स एव वीतराग आत्माऽवगम्यते, तस्यैव नाम तीर्थंकरः, ईश्वरः, देव इत्यादि। स च अष्टादशदोषरहितः, दोषाश्च प्राणातिपात–मृषावाद–अदत्तादान–मैथुन–परिग्रह–क्रोध–मान–माया–लोभ–राग–द्वेष–कलह–अभ्याख्यान–पैशून्य–रति–अरति–परपरिवाद–मायामृषावाद–मिथ्यात्वशल्याः। तस्यैकत्वमनेकत्वञ्च। जाते कर्मक्षये मुक्तिं गच्छति काचिद्व्यक्ति-स्तयाऽनेकत्वम्, आत्मनश्च स्वकीये रूपे यदा एकता तदैकत्वञ्च भवति। स च जन्म न गृह्णाति, यतो हि तत्कारणीभूतस्य कर्मणस्तदानीं विरहात्। पुनश्च रागद्वेषादिरहितः परमात्मा निरीहो भवति, अत एव तस्या कर्तृत्वम्। स एव मुक्तस्तीर्थङ्कर उपास्यः। उपासनयाचान्तःकरणस्य शुद्धिस्तस्यैवनाम धर्मः। ननु फलदाता सेव्यो भवति, अदाता निराकारोनिरञ्जनः परमेश्वरः कथं सेव्य उपास्यो वा? इत्थम्। मुमुक्षोस्तत्स्वरूपभावित्वेन तदाचरणात्। किम्वा तथात्वेऽपि तस्य तदुपासनया मलीमसस्य मनसः स्वतो निर्मलत्वरूपफलावश्यम्भावाच्च। इति। पुनः पृच्छति साहिः–हे सूरिराज! यदुक्तं भवता–उपासनाजन्यान्तःकरणस्य शुद्धिस्तस्यैव नाम धर्मः। कथन्तस्योत्पत्तिः किञ्च लक्षणम्, तदप्याख्यातुमर्हन्तत्रभवन्तः इति गुरवः–राजेन्द्र! शृणु समाहितेन मनसा, धर्मो न जात्वपि समुत्पद्यते अपितु अनादिः सः। यथा गुणा गुणिनमाश्रयन्ति तथा धर्मो धर्मिणमपि। लक्षणञ्च तस्य "वत्थु सहावो धम्मो" इति, यथा वह्नेः स्वभाव उष्णत्वम् अपां शीतलत्वम्, तथात्मनस्सच्चिदानन्दमयत्वम्। ज्ञान–दर्शन–चारित्राणि वा। तद्धर्मरक्षणोपायाश्च दानं शीलन्तपो भावः परोपकारः सेवा–संध्या–प्रतिक्रमणं–भक्तिः–सत्यमहिंसेत्यादयः। क्रोध–लोभ–मोह–मद–मान–माया–रागद्वेषादिजन्यदुर्गतौ पतिताञ्जनान् धारयति यः स धर्मपदवाच्यः। यतो धर्मस्सोऽपि

एवञ्च दानं दया-ब्रह्मचर्यमहिंसा संयमस्तपः सत्यं क्षमा ज्ञानं त्यागोपापनाद्-
तथा । अत एव दशधा धर्म इति जैनागमैर्भाषितम् । पुनः साहिना पृष्ट सूरिपाद आत्मपदार्थं विवृणोति । साहे ! जीवात्मचेतनानामनर्थान्तरज्ञानीहि । स आत्मा
योऽपि धर्म्मः । पुनः साहिना पृष्ट सूरिपाद,आत्मपदार्थं विवृणोति । साहे ! जीवात्मचेतनानामनर्थान्तरज्ञानीहि ।
सच्चिदानन्दमयः । अच्छेद्यः, अदाह्यः, अरूपी, अभेदी च यथेश्वरः । एतदीयात्मन' पार्थक्यन्तस्य तु-आवरणसत्त्वासत्त्वाभ्याम्
अतएवास्मदादीना सुख दुःखञ्च जायते । ईश्वरस्य निर्लेपत्वान्निरावरणत्वात् तदभावो भवति । तदावरणापरपर्याय कर्म इत्यस्माक-
मागमः। तेन कर्मणा—अनादिकालत आत्मा सम्बद्धः, रागद्वेषादिना च तत एवात्मा सम्बध्यते, सव्येतरविषाणयोर्युगपदिव चेतन-
कर्मणोर्यौगपद्यसम्बन्ध अनादिसिद्धः । अन्यथा पूर्वमात्मा ततः कर्म, किम्वा पूर्वं कर्म तत आत्मा इत्यादि पौर्वापर्ये आत्मनो-
ऽनित्यत्वं जन्ममरणञ्च स्याताम् । अतएवामुष्य जीवस्य संसारचक्रे परिभ्रमणम् । यदा च रागाद्यावरणात् पृथगात्मा भवति तदैव
मुक्तोऽयमात्मा इत्युच्यते । यथाहि-मृत्तिकाव्याप्तरत्नाकरस्य परिशोधनेन रत्नमिद मृत्तिकेयञ्च पृथक् २ स्फुटीभवति । तथैव यम-
नियमाद्यनुष्ठानद्वारा कर्मणः पृथगात्मा ज्योतिर्मय. परमेश्वरोऽयमित्यवगम्यते । इति । एवन्दिशा हीरसूरिमुखारविन्दतः आत्म-
सम्बन्धिवार्ता गूढाविशया मृदुलया गिरा प्रतिपादितां शृण्वताऽकब्बरसाहिना तदीयप्रकाण्डपाण्डित्ये सदाचारे च विश्वस्तेन सता
पुनः पुनः प्रशंसितः सूरिगुरुर्भूयो निवेदितः, हे दयालो सूरीन्द्र ! भवताम्प्रतिपादनशैली सकलशास्त्रे पारङ्गतत्वम्प्रतिपादयति ।
भवांश्च बुधकुलकुमुददिवाकरः, भूमण्डलेऽवरचन्द्रः । साक्षाद् गुरुकल्पश्च । नहि किमप्यगम्यम् भवतः । अतीतानागतौ च विषयौ
भवल्लोचनगोचरीभूतौ । अतोऽहं सविनयम्प्रार्थयामि, यदधुना शनैश्चरदशा प्रचलति मे, तत्फलं व्याकर्तुम्प्रभवत्वार्य इति । अथ

सूरिश्रीः—हे साहे ! आत्मकल्याणकारिणां श्रवणं मननं प्रवचनञ्च परमसुखापरपर्य्यायकमोक्षायैव वोभवीति । ये केचिदिह ज्ञानिनस्ते सर्वेऽपि क्षणिकसुखमेहन्ते । क्षणिकसुखायैव ग्रहादेर्विचारः । परमसुखार्थिनस्तु आत्मातिरिक्तविवेचना उपेक्षन्ते । अतोऽस्मिन्मीमांसा नास्माकम्, यद्येषाऽऽवश्यकी वे, तदा दैवज्ञमाहूयताम् । परन्तु हे राजेन्द्र ! विवेचनीयं भवता यदखण्डाकण्टकराज्यस्याधिपत्येऽपि नहि भवतः परं सुखम्, तदा साधारणानाञ्जनानां कुतस्तत् ? । त्वादृशो हि जनः विरला एव लोके भवन्ति, यतो हि सति प्राक्तनपुण्योदये राज्यस्यैतादृशस्याधिपत्यम् । अतोऽमुष्मिन्नपि जन्मनि तथा पुण्यसञ्चयः कार्य्यो भवता, येन परमसुखावाप्तिरपि स्यात् । इति ।

अथ प्रतिलेखनावसरः समायातः । परस्परं गोष्ठीं कुर्वन्तः शान्तिचन्द्रादयस्तदितरे च राजकर्मचारिणो गुरुसूरिसाहयोरन्यतरस्याप्यनागमनन्निरीक्ष्य परस्परं सन्दिहानाः लपनं विहाय तदा गमनदिशि दत्तदृष्टयो बभूवुः । तदानीमेव सूरिचरणानुगम् साहिवरं सुप्रसन्नमानसं सदसि समागच्छन्तमवलोकयामासुः । ततः समागतयोर्यथायथमासीनयोः साहिना सूरिगुरोः साधुत्वं विद्वत्त्वञ्च भूरिशः श्रावयता शृण्वता च तदन्तेवासियोग्यतां पृष्टो थानसिंहः साञ्जलि प्रोवाच—हे दीनबन्धो ! पूजनीयपदकमलश्रीमद्विजयहीरसूरिगुरूणामन्तेवासि संख्या पञ्चविंशत् शतंद्वयमिति । तेषु प्रथमः पट्टधरो विजयसेनसूरिमहाराजः । उपाध्यायपदवीप्रतिष्ठिताः अष्टौ । लब्धपण्डितपदानां संख्या षष्ठ्यधिकशतम् । तदतिरिक्ता अपदवीका मुनिवराः । साम्प्रतं हि गुरुपदारविन्दसेवायामुपाध्यायशान्तिचन्द्रादयस्त्रयोदशसंख्यकाः साहिसमक्षेऽत्रतिष्ठमानाः । अपरे च पञ्चपष्ठिर्निश्रामालगे । इति ।

ततः समागते गुरुगमनसमये भूपेन्द्रानुमत्या समारोहपूर्वकं सकलराजकर्मचारिणा सत्कृतः सान्वेत्रासिगुरुर्यथास्थानमलञ्चकार ।

अथ कुमुदनायके चन्द्रमसि सकललोचनगोचरीभूते चित्रशालमब्बुलफजलेन सत्रा निषण्णः परस्परं वार्तालापं कुर्वन् साहिश्रीमदकब्बरः प्राह—अस्य हीरसूरिमहात्मनः पाण्डित्यं गुरुकल्प लक्ष्यते, साधुता चास्मिन् सकलजीवोपकारिणी, निस्पृहश्चायम् प्रतिभाति । यद्दूरादागतोऽयं महात्मा यथा सन्तुष्टमनागच्छेदि तस्तयाऽनुष्ठेयम् । कस्तदीयः पन्था इति गवेषणीयं सचिवैः । अब्बुलफजलः कृताञ्जलिः यथा ज्ञापयन्ति भवन्तः । स्वामिन् ! श्रुतम्मया मोदिमुखादेकदा, यदयं महात्मा कामिनी-काञ्चनादेः स्पर्शमपि न करोति, तदस्मन्मते पुस्तकदानेनैव सत्कार्योऽयमभ्यागतः । तच्च ज्ञानसाधनभूतं भविष्यति । नूतनविषय-ग्राहिणोऽवश्यमूरीकरिष्यन्ति, तन्मे महानाश्वासः । इति शृण्वता साहिना तथास्तु गदित्वा स्वान्तःपुराभिगामिना बभूवे ।

अपरदिवसे चित्रशालापाशुपविष्टेषु सूरिसाहिप्रमुखकर्मचारिषु सूरिगुरुणा देशनाम्प्रारेभे । हे क्षितीशधर्मजिज्ञासो ! ननु विविधधर्मेषु प्राणिनामहिंसामुख्यो धर्मः । यतो हि तत्र दयादीनां सुतरां समावेशः । हिंसाजन्यपापश्च सर्वसाम्यपापान्मु-ख्यो भवतीति । हिंसा च षड्विधा । तथाहि—

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्ता चोपहर्ता च षडेते घातका स्मृताः ॥ १ ॥

पशुघातिनां तत्तद्रोमपरिमितानि वर्षाणि नरके नियत वासः । किञ्च संसारेऽस्मिन्नपि कियन्तः सुखं कियन्तश्च दुःखमनुभवन्ति । तत्र सुखं दुःखञ्च धर्मपापनिमित्तमेव भवति । इह जन्मनि जन्मान्तरे वा कृतः पापः कस्यचिज्जन्तोः प्राक्तनपुण्याधिक्यात् इह

॥ ३५ ॥

दुःखञ्च जनयेज्जन्मान्तरे तु नहि कोऽपि निवारयितुं शक्नुयात्। वस्तुतस्तु पूर्वभवे कृतेऽपि धर्मे—ऐहिकपापातिशयादिहैव जन्मनि लब्धसकलसाम्राज्यस्यापि दुःखानुभवो नियतः। तस्मात् सुखार्थिना पूर्वं षड्विधापि हिंसा हेया। राजन्! कैश्चित् पालिता काचिदजादिव्यक्तिः पालकमनुवर्तमाना तद्विनाऽहर्निशं नदन्ती त्यक्तघासाद्याहाराऽपि तेन निर्दयिना जिह्वालौल्यात् हिंसिता भवति खलु, तदाऽऽत्मनः खलु कामाय पालिता प्रिया सुतः सुताऽनुचरादयश्च समयविशेषमधिकृत्य हिंसिता न स्युस्तत्र को विश्वासः। किमधिकं ब्रूमः। कियन्तोऽविवेकशालिनः कदाचित्स्वप्राणानपि हन्तुं समर्थो भवति, तस्य परप्राणविघाते कियान् विलम्बस्स्यादिति स्वयमेव विचारयन्तुविवेकिनः अहो हन्त! तादृश आततायिपुरुषापसदे मानवत्वं पशुत्वं राक्षसत्वम्वा किन्तत्त्वमिति बीजाङ्कुरवन्निर्णेतुमशक्यं सर्वैरित्यस्माकं राद्धान्तः। एवञ्च सुखेच्छुभिर्महानुभावैरात्मवत् सर्वभूतेषु दृश्येत। तथाविध एव जनः पण्डितप्रवरः। उक्तञ्च—

मातृवत्परदारेषु परद्रव्येषु लोष्टवत्। आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ॥ १ ॥ इति ॥

हीरसूरिसमुदीरितसकलकल्याणकारिप्रवचनमाकर्ण्य साहिः पुना रम्यगिरा शङ्कते। हे दयालो! सूरिपाद! हितेच्छो!

शङ्काभिः सर्वमाक्रान्तमन्नम्पानञ्च भूतले। प्रवृत्तिः कुत्र कर्तव्या जीवितव्यं कथन्नु वा ॥ १ ॥

अयमाशयः—सर्वेषामसुरक्षणम्परमावश्यकम्प्रतिभाति, तद्रक्षणोपायाश्च ये केचित्कन्दमूलफलफूलशाकान्नादयस्तेषु प्रत्येकं जीवः प्राणाश्च। एकप्राणपालननिमित्तं द्वितीयप्राणवियोगः सुतरां सिद्धः। अन्यथाऽऽहारविहारपरिहारेण तद्रक्षणमसम्भवम्। ततो हिंसा केन वार्येत? निवारिता चेत्कथम्, हिंसादोषपरिहारोपायो वा क इति सानुकम्पमुक्तदिशाऽनुग्राह्योऽहमत्र—

भवद्भिः सद्भिरिति गुरुश्रीः–भोः साहे! श्रूयतां सावधानम् । कन्दमूलफलादिषु चेतन आस्ताम्, परन्तु नव सर्वे समानास्तेष्वपि, यथा-प्राणिषु-मनुष्येषु कश्चिन्महात्मा, कश्चिच्चक्रवर्ती कश्चिद्भूमण्डलेशः, राजा, मण्डलाधिपः, प्रजास्तत्रापि–न्यूनाधिक्यम् तथा तत्रापि-उत्तमोत्तममध्यमाधमे न्यूनाधिक्यम् । तत्रत्यनिदानाकांक्षायां नहि स्वस्वपुण्यातिरिक्तमन्यदुगदितुं कश्चित् समर्थ स्यात् । अत एव स्वस्वपुण्यानुकूलन्तत्तच्छरीरम् । एवञ्च जीवमात्रवधे पापस्यानिवार्यत्वमेव, परन्तु न्यूनाधिकपुण्यवताञ्जीवानाम्प्राणात्यये न्यूनाधिका पापसम्भाव्यते, अन्यथा न्यूनाधिकपुण्यशालिजीववधजन्यपापोदयेषु साम्ये प्रायश्चित्तव्यवस्थायामविसाम्यं प्रसज्येत, तथात्वे च व्यवस्थाया उच्छेद आपद्येत । एवञ्च अनायत्या यदि प्राणरक्षणे-एकेन्द्रियादिवनस्पत्यादिचेतनानाम्प्राणवियोगस्यावश्यम्भावित्वेऽपि, पञ्चेन्द्रियप्राणिवधवयोज्यमहापापापेक्षया लघुदुरितध्वंसनिमित्तम्प्रायश्चित्तप्रतिक्रमण–सन्ध्योपासनादिकं दैनिककर्तव्यकुक्षौ निविष्टम्मत्वा यथासाध्यं प्रत्यहम्प्रतिपलञ्च जीवरक्षणे यत्नः कार्यः । अत एव साधुसेवा, अतिथिसत्कारः गवादीनामन्नादिदानम्, गृहस्थानामावश्यकम्प्रतिभाति । न्यूनाधिकपापमित्येव विवेकिनः–सकलधनपुत्रमित्रकलत्रबान्धवादीन्परित्यज्य संसाराद्विरक्ताः सन्तः साधवो भवन्ति, तेषाञ्च हिंसाकृतपापलेशो न भवति, यतो हि तदुद्दिश्य पाकाद्यभावात् । गृहस्थास्स्वपुत्रकलत्रादिकुटुम्बपरिपोषणायैव तत्तत्कार्याणि आरभन्ते । साधवश्च पर्यटन्तो भुक्तावशिष्टेषु अनेकगेहाद्ग्रासैकशीत्वा प्राणान् पालयन्ति । परप्राणिरक्षणं कृपा च सलिलपुष्णमिवन्वन्ति नित्यशः इति ।

साहिना पुनरुच्यते हे सूरिराज ! श्रुतम्मया क्षत्रियाणां युद्ध धर्मः, तत्र युद्धे हिंसासम्भवस्यानिवार्यत्वमेव तदा कथं धर्मस्स



॥ ३७ ॥

उच्यते इति । गुरवः—श्रूयताम्भोराजेन्द्र ! क्षत्रियाणामपि युद्धन्तदैवात्रश्यकम्, यदा स्वसमानः सशस्त्रः ससैनो राज्यलुण्ठनाय सम्मुखी भवेत्तदैव । अन्यथा वैपम्ये युद्धारम्भे महापातकः । किम्वा राज्यरक्षणमपि हिंसयैव इति अव्यवस्थितम् । नहि हिंसाविरोधि विचक्षणुराजा क्षत्रियो भवन्नपि राज्यपालनं न कृतवान् नवाजयन्नालमदिति । एवं वहिंशोऽपि राजा विनायुद्धेन विजयं गत इति । इदानीन्तनास्तु क्षत्रियेतरा अपि कठोरहृदया रसास्वादपरायणा आखेटकरताश्च मृगमत्स्यकपोतादीन् वराकान् व्याहन्ति नितराम् । अहा ! तेषु यदि स्त्रियोमृतास्तदा न खलु तस्या एव मृत्युरपि तु बहूनां सम्भाव्यते, यतोहि—तदुदरस्थानाञ्जाताभिनवशिशूनाम्वा रक्षणेऽम्बाम्विना कोऽपरः समर्थस्स्यादिति । एवञ्च जीवमात्राणां हत्या सर्वैरपि हेया । पुनः साहिः—पूज्यपाद ! भवदुदीरितम्वचः सर्वथाङ्गीकर्त्तव्यमेव परन्तु यदिकश्चिद्दुराचारी बलान्मातृस्वसृदुहित्र्यादीनपहरेत्तदा तदीयवधे को दोषः ? यतो हि आततायिवधे दोषस्य विद्यमानता नास्ति । एवमेव व्याघ्रसर्पकर्कटादयोऽन्यथैव पशुपक्षीमृगादीन् गतसंज्ञकान् कुर्वन्ति, तस्मात्तद्वधेऽपि न दोषः, अन्यथा—आत्मवधदोष एव प्रसज्येत, अथ पालनापालनयोरुभयतः पाशारज्जुर्भवति, अतः परं किमाचरामः ? अत्र देव एव प्रमाणम् । गुरवः—जिज्ञासो ! वधशब्देन प्राणदण्डो न विधीयते, अपितु तथा दण्डयः स येनाजीवनन्तादृशं कर्मन कुर्य्यात्, अत एव न्यायालयकारागृहादी भवतः, राज्ञा च नीतिविदो न्यायाधीशाश्च नियोज्यन्ते, सति प्राणदण्डेन तथा दुःखमनुभवति दण्ड्यः । यथा-जीवन्कटुभाषणत्रासकुटुम्बवियोगाशनवसनशयनवैकल्यप्रयुक्तदुःसहाधिव्याधिमनुभवन्नधिगच्छति । किम्भोः ! यदि ते सुतः सुता पत्नी वा विरुद्धमाचरति तदा प्राणदण्डन्ददासि उत तदन्यत्, एवमेव

ज्ञानलवदुर्विदग्धः-सुज्ञः अज्ञो वा दण्ड्योऽपि प्राणदण्ड्यायोग्यः । यच्चोक्तं व्याघ्रादयो मानुषादीनदन्ति तेन हन्तव्या एव ते इति तन्न । जन्तवस्ते स्वयं लोकाद्भिभीता विपिनविवरादीनाश्रित्य समयं यापयन्ति, लोकांस्तदैवाक्रमन्ति यदा तानुपद्रवन्ति जनाः । प्रत्यक्षमिदं दरीदृश्यते यथात्मनाऽभिमानधिगत्यकपोतादीन् करकलितचणकानत्तु माह्वयन्ति तदा तदन्तिके निर्भीका आगत्य करस्थानपि खादन्ति सुतराम्, यदा च तदन्तःकरणे काप्यन्यैव समीहा चेत्तदाऽऽहूताश्चापि नागच्छन्ति तदुपकण्ठे । प्रत्युततदोऽतिदूरम्पलायन्ते, अतो निरपराधिनो जीवा अपि कथमपि न हन्तव्या इति अर्थेनं सर्वभूतेषु स्वात्मवद्बुद्धिस्स्यात्तदैवं हिंसायाः प्रतिरोधस्स्यात् तत्रत्यन्निदानन्दया, यतो हि धम्मस्स जयणीदया इत्यागमः । यथा मातुरभावे कस्याश्चिद्व्यक्तेरुत्पत्तिर्नास्ति तथैव दयाम्विना धर्म्मस्य । दयाच-अन्तःकरणभावस्य नाम, यथा दुःखिनन्दृष्ट्वास्वात्मनि दुःखाविर्भावः, किम्वा परदुःखप्रयोजकशब्दप्रयोग इति विवेकः । हे क्षितीश ! अहिंसा नाम कल्पवृक्ष कल्पा मातेव हितकारिणी, यत्र सद्मनि अहिंसा देवी राजते तत्र ऋद्धिसिद्ध्यादयः स्वयमेव राजन्ते, अहिंसा पालको जनः-अजातशत्रुर्भवति, सकलजनमान्यः, आरोग्यवांश्च जायते सः, जगतीतलेऽस्मिन् चन्द्रदिवाकराविव प्रणम्यः सः, एवमात्यन्तिक सुखेच्छवो जन्तवः प्रथमं सदयमहिंसाम्पालयेयुरिति ।

एवन्दिशा सूरिमुखारविन्दामृतरसम्पिपीय महीमण्डलाधीशोऽकब्बरः सविनयं साञ्जलि प्रोवाच-हे पूज्यपाद ! गुरुदेव ! ज्ञातम्मया तव दयापरायणत्व साधुत्वञ्च, नाद्यावधि भवादृशः कोऽपि लोचनगोचरीभूतः,भवमागरनिमग्नमनसाम्पोतस्त्वमसि, इहागमने कष्टातिशयमनुभूतं भवता, अतः सविनयम् प्रार्थयामि भवन्तम् क्षन्तव्योमेऽपराध इति, धन्यस्त्वं धन्यः, श्रीमतामनुकम्पयापूतोह

सराज्यपरिवारः। अथ मदर्पितं स्वीकृत्य सनाथीक्रियतान्नः। रत्नादिद्रव्यस्य स्पर्शोऽपि निषिद्धस्तत्रभवते, ज्ञानोपयोगिपुस्तकग्रहणे तु ज्ञानस्याराधनैव स्यादिति समर्पयामस्तावत्तत्। इदञ्च पुस्तकं फतेपुरसिक्र्यां पद्मसुन्दरनामकनागपुरीय तपागच्छीयजैनयते-रासीत्, तस्मिन् सुरनिकेतनातिथौ संरक्षकाभावात्तदआनीतम्, तदानीमेव संकल्पितम् लब्धविद्यो रागद्वेषादिरहितः संयमी जन एतद्योग्य इति। पुस्तिकागारेऽस्मिन् भागवत-महाभारत-पुराण-न्याय-व्याकरण-साहित्य-वेदान्त सांख्य-मीमांसा-जैनागम प्राचीना-र्वाचीनेतिहासाः इति कथयन् मञ्जूषामानेतुं खानखानाख्य कर्मचारिणमिङ्गितवान्। अथ सूरिगुरुरवोचत्! हे राजेन्द्र! ममान्तिके-आवश्यकीयपुस्तकान्यवतिष्ठन्ते, पुस्तकानां संग्रहमात्रेण न च ज्ञानस्य वृद्धिरपि तु तत्तद्विषयपर्यालोचने नैव, वृथा पुस्तकसंग्रहे मूर्च्छाख्यपरिग्रहो बाधते त्यागिनम्। अतस्तदाग्रहो न साधुः। प्रेम्णा ते सन्तुष्टोऽहम्। ततोऽबुल-फजलेनोक्तम्। आचार्यपाद! यदीदमपि नाङ्गीकरिष्यन्ति भवन्तस्तदाऽस्माकमाधिव्याधिः केन वार्येत, अधुनैव समुदीरि-तम्भवता यदि-कस्याचिन्मानसे दुःखाविर्भावो यथा न स्यात्तथाऽऽचरणीयं सद्भिरिति;। ततस्तदीयातिशयाग्रहेण विवशः सन् गुरुः "अस्तु तथा" इत्युक्त्वा "अकब्बरीयभाण्डागार" नाम्ना समुच्चार्य तत्-आगरास्थश्रीसङ्घकरकमले समर्प्य सर्वान् प्रमुदितांश्चकार। एकदा सूरिसाहि-अबुलादयः परस्परमामोदवार्त्तां कुर्वाणा आसन्। तत्र वीरबलोऽप्यासीत्, स सभाचतुर-आसीदेव, राजेन्द्रस्य साहेः प्रसन्नवदनं दृष्ट्वा-सपदि शङ्करः सगुणो निर्गुणो वेति सूरीश्वरमुद्दिश्य व्याजहार-सूरयः-शङ्करः सगुणः। वीरबलः-सगुणः कथं सः असौ तु निर्गुण एव उद्गीयते। सूरिश्रीः-शङ्करः ईश्वरो न वेतिप्रश्ने

ईश्वरो न इति गदितु न च शक्यते, तत्र मया पृष्टत्वम्–ज्ञानी–अज्ञानी वा ईश्वर इति विचारे ज्ञानीत्येव ब्रूयास्तत्र ज्ञानीति शब्दस्य ज्ञानवानर्थः, ज्ञानम्–गुणः,–एवञ्च ज्ञानमस्यास्तीति ज्ञानी–गुणी सगुण इति पर्यायान्तरमेव भवति, तथा च निर्गुणः शंकर इति सर्वथा निर्मूलम्। अथ वीरवरु आकर्ण्य मर्म युक्तियुक्त वदीयमवचः, धन्य धन्यमुदीरयन् सभां विससर्ज।

एकदा जगद्गुरुदेवः साहिसभाया धार्मिकवार्ता कुर्वन्नासीत्। तदानीमेको मायावी यवनसाधुः शुकनशाहनामा तत्रागत्य भो भो महानुभावाः! अमुष्या सभायां मदीयवस्त्रजीर्णकन्थोत्थापयितुं कश्चि समर्थ उत असमर्थ। समर्थश्चेदुत्थापयन्तु केचिदपीति जगाद। ततस्तदीयगर्वोक्तिं श्रुत्वैव सभायामुपस्थिताः कियन्तो महानुभावास्तदर्थमायासमकार्षुः। परन्तु सर्वेषामायासं वैफल्यमभिवीक्ष्य गुरो तदाक्षेपमुद्राज्ञानन् जगद्गुरुशिष्य आज्ञामादाय तत्कन्थां तृणाग्रभागेन तथा दूरम्प्रक्षिप्तवान् येन सर्वे सभासदः क्षुब्धाः, तथैव द्वितीयप्रयोगस्याप्युत्तरदानेन तथा कृताः। अथ तदीयगर्वनिराकर्तुकामः एकत्रिंशत्यासनम् उपर्युपरि सन्निवेश्य तदुपरि जगद्गुरुमुपवेश्य अधस्ताद् निःशासन निःसार्य्य निराधारं गुरुन्नभसि दर्शयित्वा सकलाश्चर्यान्वितान् कारयामास। शुकनश्च तदीयाश्चमत्कृतिम्पश्यन् लज्जयानताननस्ततस्तूर्णमेव पलायितः।

अथ चतुर्मास्याः समायाते आसन्नसमये तदीयनियमं श्रावयन् सूरिराजस्तत आगराङ्गिगमिषुर्विहारश्चकार। यथासमयं गते तत्र गुरौ तत्रत्यश्रावकं चातकनिभं पश्यन् तेषामत्याग्रहवशाच्चराङ्कगुणरसेन्दौ ( १६३९ ) चतुर्मासीं कर्तुं तदाग्रहं स्वीचकार। अथ पिपासवोजना गुरुमुखारविन्दच्युतप्रवचनसुधारसमभिपीय कृतकृत्यास्तुष्टुवुः। ततः पूर्णायान्तस्यां कुशावर्तदेशस्यशौर्यपु-

॥ ४१

र्यधिष्ठितनेमिनाथ प्रतिकृतिन्दर्शन्दर्शं स्वात्मानं धन्यतमं मन्वानो यथासमयन्तत आगत्य तत्रत्य चिन्तामणिपार्श्वनाथप्रतिबिम्ब-म्प्रत्यतिष्ठिपत्सः । तदानीमेव भूमण्डलाधीशेन श्रीमदकब्बरसाहिना प्रेषितो राजदूतस्तदन्तिकमभ्येत्य सविनयं साहिप्रोक्तनिवेदनं श्रावयित्वा स्वात्मना व्याजहार–हे विश्वहितचिन्तक ! श्रीमच्चरणरजोऽभिलाषुकाः साहीतरे तत्रत्याः पशुपक्षिप्रजाश्च वर्त्तन्ते, कारागारनिवासिनश्चाहोरात्रं रटन्ति नाम भवताम्, तेषाम्बलवती चाशावरीवर्ति, यदत्र ते महानुभावा महात्मानः परोपकारव्यसनिनः समागमिष्यंस्तदा वयं सर्वेऽपि मुक्तनिगिडबन्धना अभविष्यामः । इति । हे गुरो ! महीन्द्राश्च ऽवश्यं प्रतिबोद्धव्याः, यतो हि धार्मिके भूपतौ प्रजाया धार्मिकत्वं सुतराम्प्रायः सम्पद्यते । एकस्य महीपतेः सन्मार्गगामित्वे बहूनान्तत्वं सम्भाव्यते । किमधिकं ब्रूमः । भवन्तश्च सरलहृदयाः स्वयमेव पण्डितप्रकाण्डशिरोमणयः । अथापि प्रार्थना मे नूनसूरी-कर्तव्या तत्र भवद्भिः श्रीमद्भिः । तत्र प्रथमगमनमत्यपेक्षितम् अन्यथा कियन्त एव हताशा गतप्राणा भवेयुरित्यस्माकमाग्रहः ॥ एवम्प्रार्थिते सति जीवसखः स सूरिगुरुः सकलं विमृश्य गमनं साधु मत्वा नियतदिवसान् दूतमाख्यातवान् । ततः स दूतः प्रमोदातिशयपुलकिताङ्गः फतेपुरमागत्य स्वामिनं सकलवृत्तान्तमचीकथत् । श्रुत्वाच सर्वे अकब्बर–अबुलफजल–थानसिंहादयस्तदागमनम्प्रतीक्षमाणाः स्वस्वमनोरथरथानग्रे चालयामासुः । समायाते तत्समये च फतेपुरोपकण्ठे सूरिपादानामागमवार्तां शृण्वन्त एव साहिश्रीमदकब्बरानुगाःसंख्याविहीन मानवाः ससमारोहं सूरिचरणान् सत्कृत्य साहिप्रासादमलङ्कर्तुम्प्रार्थयामासुः । सान्तेवासि गुरवश्च माङ्गलिकप्रवचनं श्रावयन्तस्तत् स्वीचक्रुः । तद्द्वितीयदिवसे गुरुकुलकिरीटहीरसूरिदेशनासुधां मनोज्ञां निपीय साहिः

॥ ५१ ॥ पुलकितरोमा: परमप्रमोदम्प्राप्तवान् । इतरेषु कियन्तः कठोरहृदया मांसाहारिणस्तदानीमेव निवृत्तमांसमदिरादिदुर्व्यसना बभूवुः । एकदा सूरयः साहिना कथिताः—हे दयासागर ! भूतमात्रैकमते ! मदर्थं बहु कष्टञ्जातं भवतः, तदर्थमतीवचेतश्चेखिद्यते मे, यावत्त्वया मदर्पितं न गृहीतं तावन्मम स्वान्तमशान्तं स्थास्यति अत उररीकर्त्तव्यन्तदिति सविनयम्प्रार्थना । ततः सूरिणोक्तम्—अये महीन्द्राः ! आग्रहस्ते मामतीव बाधते, यद्यशान्तं स्यात्तदा मदादिष्टमनुमन्वस्व शान्तश्च कुरुतात् । राज्ये तव बन्दिनः पिञ्जरान्तर्वर्त्तिनश्च सदयं मुञ्च, राजनगरोपकण्ठे विपुलतडागस्थानां मीनादीनां जालादिनापि वधो यथा निषिद्धस्स्यात्तथा कर्त्तव्यः, अस्मदीय पर्य्यूषणपर्वणि च जीवमात्रवधनिषेधस्यानिवार्य्यता यथा स्यात्तथा कर्तव्यम् फुरमाणपत्रन्तदर्थं भवितव्यमिति । साहिः—गुरो ! यदुक्तं भवता तदुरीकृतम्मया, परन्तु तावता किञ्चात्तं भवतः, अथापि किमप्याज्ञाप्यताम् । गुरवः—हेनरवरावतंस ! यदुक्तम्मया तत् सर्वं सर्वेषां हितकरम्, नातः परं किमपि वक्तव्यम्, लध्वी विचारणा नात्र समुचिता । जीवघातकस्तव राज्याद् यथानिष्कासितस्तथा घोषणा कार्य्या तूर्णमिति । अथाकब्बरस्त्वरितमेव तत्कथनानुसारिवचः स्वीकृत्य कारागारनिवासिभ्यः पिञ्जरग्रहग्रसितपतङ्गेभ्यश्चाभयदानं दत्वा तदीयजयरावंशृण्वन् तत्तडागस्थमत्स्यादिवधनिरोधनियमं, पर्य्यूषणे चतुरोधिकान् संयोज्य द्वादशदिनानि ( भाद्रकृष्णदशमीतो भाद्रशुक्लषष्ठीं यावत् ) राजधान्यां जीवहिंसका मृत्युभागिनः इति फुरमाणं लिखित्वा सूरिकरकमले समर्प्य गुर्जर—मालव—अजमेर—दिल्ली—फतेपुर—लाहोर—न्यायाधीशमभिधे—एकैकम्फुरमाणमप्रैषीत् ।

एकस्मिन्समये विजयराजनामा साहिप्रियः साहिमचकथत् । प्रभो ! अस्माकं वांछा दीक्षाग्रेतुम, तदत्र आज्ञाप्यताम् । साहिः— ॥ ५२ ॥

विजयराज ! दीक्षायां महान्क्लेशः सञ्जायते, एतत्तवाविचारस्त्वत्कृते नोचितः मदभिलषितानि गजवाजिरत्नादीनि पूरितानि स्युः । विजयराजः प्राह–नरेन्द्र ! अलं रत्नादिना, अपारः संसारोऽयं रागरञ्जितः । सतिरागे कष्टमेव जायते न च सुखम् । तथाहि–यत्र वस्तुनि रागो लोकानाम् भाग्योदयात्तल्लब्धमपि, कारणवशान्नोपभुक्तम्, किम्।। ततोऽभिलाषा, तत्पूर्तौ ततस्ततः परमित्य नवरथया इच्छाया अपूर्तौ दुःखमेव । अप्राप्ते सुतरामेव तत् । अत एव विषयसंयोगे दुःखं तद्वियोग एव सुखमिति विवेकिनः । एवं सर्वं विविच्य मया आलोकितम् वैराग्यमेव श्रेयः । अत एव जनको मे संसाराद्विरक्तो दीक्षामुरीचकार । तथैवाहमपि तदादेशमादाय दीक्षां गृहीत्वा संसृतिचक्राद्बहिर्भविष्यामीति । ततः साहिः–तदीयदार्ढ्यं निरीक्ष्य जगद्गुरुभ्यो दीक्षां दापयित्वा तदिच्छाम्पूरितवान् स च दीक्षितो राजविजयनामा साहिपतिनाम्ना प्रसिद्धिं गतः ।

एकदा सूरिगुरावतिप्रसन्नः साहिः प्रजाजनानाहूय समारोहं हीरसूरये जगद्गुरुबिरुदं दत्वा गुरुस्तुतिकर्त्रे भट्टायैकस्मै लक्षरूप्यकं ददानस्तदुत्सवे कोट्यात्मकद्रव्यस्य वितरणपूर्वकं लक्ष्म्याः सदुपयोगश्चकार । जगद्गुरुपददानसमये सदारङ्गश्रेष्ठी याचककुलान् सहस्राधिकद्रव्यैः सन्तोषयामास । तदन्ये च श्रेष्ठिनः श्रीकरुराजप्रभावनाश्चक्रुः । तदवसरे साहेरनुमोदनम्मत्वा साहिप्रियजेताशाहनामकनागोरिश्रावकं स्वपट्टतया दीक्षितं कुर्वन् जगद्गुरुर्जितविजय नाम चकार । स दीक्षितः साधुः साहिपजिनाम्ना प्रसिद्धिं गतः । तदानीन्तनामोदवीचीतरङ्गप्रवाहपतितेष्वन्यतमो थानसिंहः स्वमन्दिरे जिनेश्वर प्रतिमायाः प्रतिष्ठाम्, दूजणमल्लाभिधो द्वितीयाम्प्रतिष्ठाम् श्रीमद्विजयहीरसूरिजगद्गुरुकरकमलात्कारितवान् । प्रतिष्ठासमय एव शान्तिचन्द्रजीः–उपाध्यायपदेन विभूषितः,

एतन्दिशाप्रवर्धमानजगद्गुरुणाम्प्रतिभाविशेषन्निरीक्ष्य साहिः—चतुर्मासीं कर्तुं भूयोभूयः प्रार्थयामास । गुरुभीरपि विपाभोरत्याग्रह-मालोक्य अम्बराब्धिरसकौ (१६४०) वर्षे चतुर्मासीं स्वीचकार । क्रमात्सानन्द पर्युषणाख्यपर्वणि साहिसमुद्घोषिताहिंसा-स्तुतिभिःपर्यावेक्ष्य प्रफुल्लवदनो जगद्गुरुः पूर्णायाञ्चतुर्मास्यामुपाध्यायप्रवरश्रीशान्तिचन्द्रमहोदयं मनाङ्कुरपोषणनिमित्तन्तत्रैव स्थातुं भणित्वा ततो विहरन् प्राच्यजैनस्तूपालङ्कृतमिद्धमथुरामागत्य यात्रयानन्दस्ततोऽपि ग्वालियरगोपगिरौ द्वयधिकपञ्च-शतहस्तमितदीर्घाकृतिजिनप्रतिमान्निरीक्ष्य भूरधिरसेन्दु( १६४१ )वर्षे चतुर्मासीमभिकोर्युर्हिश्रीमागच्छन् निजप्रवचनमहिम्ना प्रतिसम-माननीयाहिंसादेवीम्प्रतिष्ठापयन् पर्यटन् बाहुपमुद्ररसेन्दौ ( १६४२ ) श्रीगुजरातनगरस्यागराचतुर्मासीमारब्धवान् । तन्मध्ये जगद्गुरुणा मधुरसुधागिरा मुग्धाः सहृदयेतरा म्लेच्छा अपि दयाजननीं भजन्तो मत्स्यमांसाशनम्परित्यजन्तोऽनुरक्ता-स्तत्पादपद्ममकरन्दनिलिन्दा बभूवुः ।

एकदा जगद्गुरुणा—उक्तोऽकब्बरसाहिः, हे साहे ! आयुस्ते शुभः, यतो हि हीनशक्तिशरीरोऽमे दिनानुदिनम्भोभवतीति, अथ गुर्जरान्तःपातिशत्रुञ्जयादिप्रधानतीर्थस्य यात्रा कृत्वा एकत्र तीर्थस्थाने शेषसमययापनं करोमि, किन्तु तत्र तत्र कियन्तोऽ-त्याचारपरायणा जीवघनन्यशोणितसरिद्वाहयन्ति, अतो मे चित्तन्दोदूयते नितराम्, अथ साहिकरकलितफुरमाणन्तथाऽपेक्षि-तम्प्रतिभाति यथा शत्रुञ्जय–गिरनार–आबू–तारङ्गा–केशरिया–सम्मेतशिखर–राजगृहादिमुख्यतीर्थस्थाने सर्वथा जीवहत्या निवारिता स्यादिति ॥

ततः श्रुत्वा गुरुगिरः साहिः सत्वरमेव फुरमाणं लिखितुमारब्धवान् तद्यथा—' अये–मदाज्ञावर्तिनः ! राष्ट्रे मम ये केचन हिन्दवस्तदितरे चाबालवृद्धाः, ते सर्वे सूचिता भवन्ति यत् इहास्मद्राजधान्यान्तःपाति शत्रुञ्जय–पावा–गिरनार–सम्मेतशिखर–आबू–तारङ्गा–केशरिया–राजगृहादिजैनतीर्थस्थानानि यानि सन्ति, तत्र कैश्चिदपि केचिज्जीवान न हन्तव्याः कदाचित् । अमूनि तीर्थस्थानानि च जगद्गुरुहीरसूरिकरकमले समर्पितानि अन्येषामनधिकारित्वम्प्रतिपादयन्ति । अत्र जीवदयामात्रमुद्दिश्य सर्वैरेप नियमः पालनीय एवेति । जलालुद्दीनमोहम्मद अकब्बरसाहिः ।' इति फुरमाणञ्जगद्गुरुकरकमले सादरं समर्प्य साहिः साञ्जलि प्रोवाच–महात्मन् ! भवादृशानां विश्वहितचिन्तकानां भाग्योदयादृते न स्थितिः इतो गमनन्ते ममाभाग्यसूचकँल्लपति, किमधिकं ब्रवीमि, अयमहन्दासस्ते न विस्मर्त्तव्यः कदाचन सेवायोग्यश्च निवेदनीयं सदयमिति भूयोभूयश्चमामकमभिवादनम् ॥

ततो जगद्गुरुः साहिप्रियं मधुवचः श्रुत्वा तदर्थं शान्तिचन्द्रोपाध्यायन्नियुज्य धर्माशिषा सकलजनानाश्वास्य शिष्यैः सह गुर्जरदिशायाम्प्रस्थानञ्चकार । शांतिचन्द्रोपाध्यायश्च जगद्गुरुदिशाप्रतिदिवसं प्रवचनसुधया सकलजनान् सन्तोषयन् साहिचित्रशालायां साहिना विद्वद्गोष्ठीं कुर्वन् सकलजनप्रियो बभूव ।

एकदा साहिनाऽभाणि–हे उपाध्याय ! भवान् योगिकुलकुमुददिवाकरजगद्गुरूणामन्तेवासी, भवतः साध्यं सर्वं भवेदित्याशा मे, नाद्यावधि किमपि चित्रन्दर्शितम्, मयि महती जगद्गुरूणां कृपा लसति स्म, तत्रभवतामल्पीयसी लक्ष्यते, नैवमुचितम् ।

ततः समयम्प्राप्य एकदा तेनसाहिनासार्धं मेकस्मिन्नारामे गत्वा हुमायु–बाबर–शेख–सुल्तान–महमद मीरशाह शूरवीर

नामकान् सम पूर्वजान् दर्शयित्वा साहिं शुश्वतरश्चकार । तत आरभ्य श्रीशान्तिचन्द्रोपाध्याये जैन धर्मे च साहेर्महान् विश्वासोऽजनिष्ट । अथानतिकालएवोपाध्यायवर्यकलरवकलहंसोपम यशोविलोलं श्रुत्वाविमारि परितः परोन्नतिजनासहिष्णुः स्पर्धालुर्दिगम्बरभट्टारको वादिभूषण उपाध्यायेन सह शास्त्रार्थङ्कर्तुं घोषणामकार्षीत् । लब्धाष्टोत्तरशतावधानालौकिकप्रतिभाविशेषस्य तस्योपाध्यायस्य शास्त्रार्थकरणं हस्तामलकवत् आसीत् । वागडीयवटशिजनगराधीशजोधपुरीयभूपमल्लदेवगात्रजनुसहस्रमल्लयोश्चाध्यक्षतायां गुणचन्द्राभिधेयदिगम्बराचार्यं शास्त्रार्थे पराजित्य दिग्विजयी-उपाध्यायः स तदीयोद्घोषणां श्रुत्वा-ईडरगढाधीश-श्रीनारायण—सभायां शास्त्रार्थं कृत्वा पराजित्य वादिभूषणं जियमाला गृहीत्वा सकलजनप्रशस्यो बभूव । श्रीमद कब्बर शान्तिचन्द्रोपाध्यायरचितकृपारसकोशस्थ अष्टाविंशत्यधिकशतश्लोकान् तदीयास्याच्छ्रुत्वा धन्यवादन्ददानस्तस्मिन्न त्यनुरक्तो बभूव । उपाध्यायगिर उररीकृत्य पशुचरणकरं विमुच्य प्रतिवर्षं षड्मासानि वेनामारिश्च प्रवर्तिता षाड्मासिकजीवनघनिरो धश्च निम्नप्रकारः-पर्यूषणपर्वणि द्वादशदिनानि । प्रतिसूर्यादिनम् । सोफियान-ईदनामकपर्वदिनानि । साहिजन्ममासः । साहिसूनुजन्ममासाः । मिहिरनरोजाख्यपर्वदिनानि । मुहुरम्माख्यदिनानि च । अमुना प्रकारेण अहिंसादेवीमाराध्य प्रतिपक्षं दिवसं पञ्चदशसहस्रमितजीवेभ्यः कालव्यालमुखान्तरालपतितेभ्यस्समदयमभयदानन्ददता पूर्वकृतहिंसायाः पश्चात्तापं कुर्वन्नसमाहिलोकैर्जैनान्तःपातीव गण्यतेस्म ।

अथ गुरुचरणरजःकणिकालोलुपः शान्तिचन्द्रोपाध्यायः स्वसतीर्थ्यं भानुचन्द्रं स्वस्थानापन्नं कृत्वाऽकब्बरकृते, ततो

गुर्जराभिमुखीभूय पथ्यागतपिपासुजनान् माधुरीं देशनाम्पाययन्नन्तरं साहेः कार्यं श्रावयित्वा श्रीमज्ञामलदद्दलं फुरमाणदलं समर्प्य प्रफुल्लश्रीपदाब्जस्य मधुव्रतो बभूव। गुरवश्च विदितवृत्ताः सानन्दं नव्यमव्योदन्तं सकलान् श्रावयन्त आनन्दञ्जग्मुः ॥

इतो विजयसेनसूरिणा चतुर्मासीद्वयं कृत्वा बाहूदधिरसेन्दौ (१६४२) पत्तनाख्यनगरे चतुर्मासीं कर्त्तुमागतः। अन्तरा अन्तरा प्रतिवादिनः पराजित्य 'खरतरगच्छीय जैनाचार्य्येण सह धर्मसागरजिमहोदयकृतप्रवचनपरीक्षाख्यग्रन्थे चतुर्दशदिनानि राजसदसि शास्त्रार्थमप्रतिहतप्रवाहम्प्रचालितम्, अन्ते च तमपि पराजित्य विजयपताकामुत्तोलयन् गुरुराजहीरसूरिमहाराजीयं कृपेति प्रसारयामास। लब्धप्रतिष्ठस्य तस्याचार्य्यवर्यस्य रुष्टा अनुयायिनः—अमदावादस्थ-कल्याणराजनामकं साधुवरं कथितवन्तः-हे मुनिपुङ्गव! आचार्यचरणस्याप्रतिष्ठादुनोत्यस्मान्, अतः केनाप्युपायेन, राजसत्तामधिकृत्य शास्त्रार्थे विजयसेन-सूरिशिष्यम्पराजित्य गौरवं रक्षतात्, अन्यथा दुःसहो मानभंगोमामक आत्मश्रेयसि महाबाधकस्यादिति। ततस्त्वरितमेव कल्याणाभिधः स खानखानाख्यमहीन्द्रस्य सभायां सामन्तादिराजकर्मचारिसमक्षे शास्त्रार्थमारब्धवान्। कृतेऽपि बहुवाऽऽयासे विजयपथपथिकायमानं स्वात्मानमनवलोक्य मौनञ्चकार। सेनसूरिशिष्यजयरावः परितः संसारं बबन्ध। अनतिकाल एव शिष्यः स औष्ट्रिकमतानुयायिसंशयसमवायं दूरीकृत्यसेनहीरगुरुणां दयाकृज्ज्ञानानः प्रमोदमानसोऽभूत्। कर्णाकर्णितया शिष्याणां शास्त्रार्थपाटवं श्रुत्वा प्रफुल्लवदनः श्रीविजयसेनसूरिः पत्तनपत्तनात्कृत्वा यात्रां यथासमयममदावादमाजगाम। तत्रत्य महीन्द्रः श्रीपदार्पणस्वागतं महता समारोहेण सस्नेहञ्चकार। नगरनार्य्यश्च स्वर्णिकासने हीरामाणिक्यमौक्तिकया स्वस्तिकन्निर्माय

श्रीमदङ्घ्रियुगलमानर्चुः । श्रावकाः प्रभावना स्वामिवात्सल्यादी यथा द्रव्योपयोगमकार्षुः येनाद्यावधि तत्कीर्त्तिगानमश्रूयते ननु । सूरिसमारब्धदेशना भागीरथीप्रवाहे प्रवहमानेन जैनेन सता 'खानखानाख्य' भूपः, जैनेतरधार्मिकजनाश्च मुग्धाः सन्त एवं सूरिपादं गुरुत्वं मेनिरे । श्रीचरणाश्च राज्ञः प्रार्थनाश्च चक्रुः प्रशाशनमत्र चातुर्मासीं स्थित्वैव कुर्वन् भविकजनहृदयक्षेत्रे धर्मबीजम्प्ररोपयामास ।

एतदनन्तरं सूरिकिरीटा जगद्गुरुहीरसूरिचरणा आगरा—फतेपुराभिरामावादागराद् चतुर्मासीं कृत्वा 'फत्तेदिल्लीपर्यस्य दर्शनानन्तरं नागपुरे पञ्चमीश्चतुर्मासीं निर्विघ्नमकार्षुः । एवन्दिशा गुर्जरादये तदन्यत्र च कैवल्यपथोपायान दर्शयन्तो मेडतापुरीमाप्य चिरन्तनपरिचितान्यतमाना श्रीमता खानखानाख्य धर्मचारिणाप्रतिवर्तितिस्वस्यागमनागा स्वीचक्रुः । एकदा जगद्गुरुसमीपे पृच्छति खानखानाकः । हे सूरीश्वर ! ईश्वरः रूपी—अरूपी वा ? सूरीश्वरः—राजन् ! अरूपी ईश्वरः । खानखानाकः—अरूपी चेदीश्वरः कथं मूर्तिस्थापनया रूपिणम्पूजयन्ति जनाः । सूरीशः—जिज्ञासो ! शृणु । मूर्तिम्बिना नहि कस्यचिज्ज्ञानमपि भवति, मूर्तिस्तत्तद्व्यक्तेः परिचायिका भवति, यथा—अयं हिन्दुस्तदितरः इयं स्त्री, अयम्पुमान्, अयम्पशुः स्थावर इत्यादि । एवमरूपि पदार्थस्यापि ज्ञानाय मूर्तिरवश्यमालम्बनीया । खानखानाकः—योगिराज ! निराकारस्य परमेश्वरस्य ध्याने शास्त्रप्रतिपादितमार्गमेव पर्याप्तम्, अलं मूर्त्याश्रयणेन । जगद्गुरवः—सत्यमुद्गीयते भवता, समायातः पन्था मे, अत्रेदम्पृच्छयते, शास्त्रं मूर्तिमत्—अमूर्तिमद् वा ? तत्र अमूर्तिमद्वक्तुं न शक्यते, अमूर्तिमतो वस्तुनोऽङ्गीकृत्वात्, मूर्तिमतः शास्त्रस्य कीदृशी मूर्तिरिति प्रश्ने मूर्त्याकृतिर्न तु तदतिरिक्तः पदार्थः, एवञ्च शास्त्रस्य तत्प्रतिपादितविषयस्य च सर्वस्य मूर्तिमत्त्वं निराबाधं सिद्धम् । खानखानाकः—मूर्तिम्बिना

॥ ४९ ॥

तज्ज्ञानध्याने न भवतश्चेत्कथमूरीक्रियते ईश्वरस्यारूपित्वमिति । सूरयः--सति रूपित्वे तस्य सकलजनलोचनगोचरता, तद्गवेषण-तत्पराणां बहुलायासवैफल्यञ्च स्यात्, अतोऽनायत्याऽरूपित्वन्तस्याङ्गीकार्य्यम्, तज्ज्ञानध्यानयोः सौलभ्याय मूर्तिमद्वस्तुन आलम्बनम् । तत्र शास्त्रमात्रालम्बने आपामराणां ध्यानादिकन्दुःशक्म्भवति, विलक्षणाकृतिमद् वस्तुनि च सकलप्रमाणतो वरिष्ठ-प्रत्यक्षप्रमाणेन यथा दृढिष्ठा श्रद्धा, भावः, स्नेहस्तथा नेतरेण भवितुमर्हतीति । खानखाना पुन उच्छृङ्खलत्वदिव पृच्छति-महा-त्मन् ! मूर्तौ ईश्वराराधने देवस्येव देव्या अपि मूर्तिस्तत्र यथा देवमुखपद्मकरचरणादिदर्शनेन प्रीतिरुत्पद्यते, तथा देव्या अपि कमलमुकुलस्तनाद्यवयवदर्शनेन सा, तथा च तद्ध्यानेन चिन्तनेन वा कामादेराविर्भावः कथन्तदापरमार्थसाधनत्वम् मूर्तिमत इति सूरिगुरुः-हे देवानाम्प्रिय ! प्रतिदिवसं स्वसुतायां स्वस्नुषायाम्वा मुग्धायां यथा विकृतिलवात्यन्ताभावस्तथेहापि सुज्ञैरालो-कनीयम् नहि जात्वपि मातरम्वा स्वसारम्वा निरीक्ष्य कामादेर्विकारः केषांचिदपि जायत इति । खानखानाकः-गुरो ! मूर्तिः पाषाणस्य काष्ठस्य मृत्तिकाया वा, तत्रेश्वरस्यास्तित्वञ्च सम्भवति, यद्यभविष्यत्तदा देहीशवदिष्यत, एवञ्च तत्राराधनं विफल-मेवप्रतिभाति, किमतः परं कार्य्यम् । सूरिश्रीः—श्रृणुत पाषाणादौ मास्तामीश्वरः किन्तु तत्र देवत्वबुद्धया पूजनेन ध्यानेन सेवनेन वा विलक्षणभाव उत्पद्यत एव तथा च पूण्योदयादीश्वरस्मरणम् यथाऽदृष्टपितृको विस्मृतजनको वा जनः प्रतिकृतिम्पितुः पश्यन् तत्र जनकभावम्मन्यमानस्तदाराधनेन चेतः प्रसादयति तथात्रापि आगमोक्तदेवस्वरूपानुकल्पमूर्तिमत्पदार्थम्प्रतिष्ठितमागमोक्त-विधिना, पूजयन् ध्यायन् वाऽन्तःकरणस्य शुद्धिं करोति लोकः । अपरञ्च यदि तत्रैव तथाऽऽस्या निरन्तरा भक्तिश्च स्यातान्तदा-

नूनमेव भक्तजनेन लपेत्सामूर्त्तिः । एतश्च सकलास्तिकवर्गैर्मूर्तिर्मन्तव्यैव अरूपिपरमेश्वरस्य मननंध्यानं भजनञ्चा वस्तुत आत्मज्ञानिकृते लसति, अन्यथा बुद्धेरपरिपक्वतादशायां सिद्धिस्थानापन्ने वैपरीत्यमेव भजेत । अथ खानखानाकः–सनम्रम् प्राह–सत्यञ्जगद्गुरुणा जल्पितम्, अस्माभिरपि किमप्यालम्ब्यैव स्मर्य्यते सः । आलम्बनमल्पधिया मत्यावश्यकमेव । हे साधुकुलकिरीट ! यदत्र कष्टन्दत्तम्मया तदर्थन्निवेदयामि क्षन्तुमिति ॥

अथ संशयानां च्छेत्तारो जगद्गुरवः सर्वान् सानन्दान् कृत्वा ततः क्रमाद्विहारं कुर्वन्तः सिरोहिपत्तनमाजग्मुः । इतः सेनसूरिः प्राप्तगुरुच्छदनस्ततस्त्वरितमागच्छन् गुरुपददर्शनार्थलोलुपो जगद्गुरुसेवायामागत्य–अमन्दानन्दमकरन्दमिलिन्दो बभूव । पारस्परिकवार्तालापेन गुरूणामप्यामोदप्रवाहः सञ्जातः । तत्र सेवायां कियन्ति दिनानि स्थित्वा सेनसूरिर्गुरुदेवादेशानुकूलं गमनं स्तम्भतीर्थाय चकार । इतो जगद्गुरवो विहारं कृत्वा यथासमयं मगसुदाबादमाजग्मुः । तदासन्न एव हिन्दुकुलकिरीट जगद्विख्यात राणावंश समुद्भूत ' प्रतापसिंहजी राजेन्द्ररदितदलं जगद्गुरुमरालमानेतुं समागतम् ॥

स्तम्भतीर्थगतेषु विजयसेनसूरिषु–प्रतिष्ठाकार्य्यससञ्चालकाभ्यां वजियाराजियानामकाभ्यांप्रतिष्ठाकार्य्यमारब्धम् । समायाते च 'शरसमुद्ररसेन्दौ ( १६४५ ) शुभमुहूर्त्ते विजयसेनसूरिकरकमलाच्चिन्तामणिपार्श्वनाथमहावीरयोश्च प्रतिबिम्बे प्रतिष्ठापिते । तत्र मुख्यस्थाने सप्तफणिधरविशालकायपार्श्वप्रतिबिम्बमासीत् । प्रतिष्ठानन्तरमेव तदीयचमत्कारो दिगन्तरालम्व्यापः ॥ एवन्निरुक्तश्रावकसद्व्ययनिर्मितद्वादशस्तम्भषड्द्वारसप्तदेवकुलिका पञ्चविंशत् सोपानसमलङ्कृतमहामन्दिरे जगद्गुरुकरकमलात्

पार्श्वनाथमहावीरादिजिनेश्वरप्रतिबिम्बानि प्रतिष्ठापितानि । इतः साहिसविधे शान्तिचन्द्रस्यानापन्ने श्रीभानुचन्द्रसिद्धिचन्द्रौ विराजमानौ स्तः, तयोर्मध्ये बाणभट्टकृतकादम्बरीटीकाकर्ता सिद्धिचन्द्राख्यः सच्छिष्यः साहिं सूर्यसहस्रनामानि पाठयित्वा-कुशाग्रतीक्ष्णाशेमुषीमन्तञ्चकार, शतावधानिनि फारसीज्ञे सिद्धिचन्द्रे स्नेहबाहुल्यमासीत् इति तस्मै खुशफहेमविरुदन्ददौ । एकदा ताभ्यां मुखारविन्दतो जगद्गुरुप्रधानपट्टधरस्य विजयसेनसूरेरलौकिकप्रतिभाज्ञानानः साहिः तामपाश्रिरवस्थितिं ज्ञात्वा जगद्गुरुसविधे पत्रमप्रैषीत् तत्रदले भवत्पट्टधरस्य विजयसेनसूरेर्मिलनत्कारः श्रुत्वस्तदर्थमो हार्दिकी-उत्कण्ठा वरीवर्ति, कृपया लाहोरनगरं यथातदीयाङ्घ्रिरजसापूतं स्यात्तथा कार्यन्तत्रभवद्भिः सानुकम्पम् । भानुप्रभानानां भानूनां भास्कानामाज्ञां मत्वा शत्रुञ्जयतीर्थस्य करो नातःपरं ग्रहीतव्यस्तस्याधिपत्यञ्च भवति भवतः इति ।

अथ पत्रद्वयम्प्राप्य जगद्गुरवस्ततो विहारं कृत्वा राधनपुरमागत्य भविजनाज्ञानतमो विनाश्य सन्मार्गसोपानन्दर्शयामासुः । इतः स्तम्भतीर्थाद् विजयसेनसूरिः परावर्तमानो गुरुचरणान्तिके समुपस्थितोऽपत्रद्वयमत्रवमाकर्ण्य हर्षातिशयेन पुलकितरोमा बभूव।

एकदा गच्छाद्बहिष्कृतेः सामरुसागरः पर्यटन् यदा राधनपुरं गतो गुरुः तदैव सोऽपि तत्रागच्छत्, ततस्तदन्तिके गत्वा सविनयं निजपदच्छायायामुपवेशनार्थम्प्रार्थनाञ्चकार । अथापि गुरवो न मेनिरे । ततस्त उपायान्तरानन्वेषयन् मनसि चिन्तयति, यदि नगराधीशोऽयं काशीमखानः-गुरुं सानुरोधं वक्ष्यति तदावश्यं ग्रहिष्यति मे गुरुः । एवं विमृश्य तत्र गत्वा सकलवृत्तान्तमचीकथत् । काशिमखानोऽपि तमाश्वास्य-समयमवगत्य गुरुन्तदर्थमगादीत् । गुरुश्रीरवोचत्,-काशिम ! यथा वै वनपादिकुटुम्बः

प्रियस्तथा विदुषां सन्यासिना साधूनाञ्च शिष्यः, परन्तु गुरुर्जनाज्ञाकारी यथा सः, नाय-अथेति गच्छाद्बहिष्कृतः। काशिनखानाः-गुरुदेव! इदन्तु सत्यमुद्गीयते भवता, अथापि स्रोशापराधं मन्ानस्यापि नोद्धारस्तदा कान्या गतिः? इति दिशा गुरुम्प्रमोदीकुर्वन् तमाहूय गुरुचरणसरोजे निवेश्य प्रतिज्ञमाज्ञामतोमनुपर इतिभगन् तदीयोद्धारश्चकार।

एकदा रहसि सेवावक्तः सेनाचार्यः-गुरुणादिष्टः-हे सेन! माइरुकुण्ठा तव कोऽपि नोत्तिष्ठ, अस्माकमपि विचारः, विश्वासश्च मे, तत्रत्या अपि गते भवति भवतः भवन्ति। सेनसूरिः सविनयम् यथाज्ञापयन्ति-श्रीपादाः! कृपया श्रीमता सर्वत्रैव एव, केवल पूज्यपादानान्दर्शनाभावस्तत्र, तथापि-श्रीमत्क आदेशः शिरसा एव। तथास्तु। ततो रसाब्धिरसभूकला-नुसारि ( १६४६ ) मार्गशीर्षशुक्लतृतीयायान्तिथौ गुरुपदरजः शिरसि धारयित्वा कृताभिवादनस्ततो यात्रां कृत्वा पर्यटन् पाटणादिनगरं वैरुवाडाऽद्भूतीर्थदिशा सिरोहिपत्तनमलञ्चकार। तत्रत्या ग ानुकूलप्रवचनतया जातम् येन नगराधीशेन सुरत्राणेण मद्यमासौ परित्यक्तौ, अन्यैरपि कतिपयैर्दुराचारस्त्यक्तः। ततः कमात्रादपुरोमेत्य वास्कैः सहामोदविनोदमाचरन् मन्दानन्दञ्जगाम तत्रत्यास्थितिरत्यन्तरमणी आसीत्, यतोहि-'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' सार्वजनीनमेतत्। अद्यापि विरक्तस्य तस्य मोहलेशाभावात् सर्वं विस्मृत्य ताश्च रुन् स मेडतानगराधीशकृतस्वागतं स्वीकुर्वन् ततो वैराटनगरीय-भविकजनतरुपोपकमद्भूधर्मसुधाम्पातयन् लुधियानापुरीमाययौ। सूरेरागमनसमाचारोऽनतिदूरतया लाहोरस्य चतुर्दिक्षु द्रागेव प्रसृतः। ततश्च-श्रुतागमसमाचारोऽतुलफजलमोदरः सचिवान्यतम फायजीनामा-दशपदस्तसेनानायकः प्रजाजनेन साडम्बरन्तदन्तिके गत्वा

॥ ५३ ॥

स्वागतपूर्वकं सूरिवरम्पुरस्कृत्य ततः पञ्चक्रोशिवनान्तर्वर्त्तिसाहिप्रासादमनैषीत् । तत्रैव-समागच्छता सान्तेवासिभानुचन्द्रेण गुरुचरणावदर्शिषाताम् । ततः सर्वे मिलित्वा लाहोरोपकण्ठे गञ्चनामकशाखापुरमाजग्मुः । ससेनकर्मचारिश्रीमदकब्बरसाहिः प्रजारञ्जितो नानावाद्यविशेषैः सूरिगुरूणाञ्जयरावैर्गगनमण्डलम्पूरयन् सत्कृतं गुरुन्तं प्रवचनालये सुसज्जितयोग्यासने प्रत्यतिष्ठिपत् । अथ प्राथमिकमाङ्गलिकन्तदीयप्रवचनं श्रुत्वैव सर्वे मोहंगता धन्यतमं स्वात्मानममानिषुः । ततो दिनानुदिनं श्रुतचमत्कृत्यनुरूपाम्परीक्षां कृत्वा साहिस्तस्मिन् जगद्गुराविवानुरक्तो भूत्वा तत्करकमलकलितोपाध्यायविरुदैर्भानुचन्द्रं भूषितं कारयन् श्रीसंघकृतोत्सवे शेखव्ययीकृतषट्शतरूप्यकव्यये धन्यमुच्चारयन् परमानन्दसन्दोहनिमग्नो बभूव ।

साहिसभायामपि जगद्गुरुहीरसूरिपदपद्ममधुकरश्रीविजयसेनसूरिपादानामप्रतिमप्रतिभया बहुला अपि विद्वांसः पराजयङ्गताः पराङ्मुखीभूता अग्लासिषुः। तत्रैव राजसदसि सूरिकरुणया नन्दिविजयेनाष्टशतावधानानि कृतानि । उत्सवेऽस्मिन् 'मरुस्थलयाः—मल्लदेवात्मज उदयसिंहभूपः, कच्छस्य मानसिंह भूपः, खानखानाकः शेखः, आजमखानः जालोरस्य गजनीखांन आदयो महाराजा उपस्थिता आसन् नन्दिविजयप्रतिभान्निरीक्ष्य साहिः 'खुशफहेम' पदम्प्रददौ । एवन्दिश्वा साहेरत्यनुरागता तस्मिन्नजनिष्ट । सूरेश्च समुज्वलाविसारिणी धवला कीर्तिश्चिरमेव चतुर्दिक्षु प्रसृता बभूव ।

एकदा साहिपृष्टसेनसूरिरवोचत्—राजेन्द्र ! जगद्गुरवः साम्प्रतं राधने विद्योतमानास्तव कृते धर्माशिषा सह अहिंसा देव्या नित्यशः पूजनं कार्य्यमित्यगादिषुः । युक्तश्चैतत् । तथाकृते पापेन राहुणा भूचन्द्रस्त्वं न च जात्वपि ग्रस्तः स्याः । जगद्गुरुणां

स्वास्थ्यमिदानीमनुकूलं समाविलीनश्च चेतः। कृत्वा तेऽनुसरन्ति भाग्यवन्तम्, इति प्रियमञ्जुवचस्तदीयंश्रुत्वा स्वात्मानं कृतकृत्यं मन्वानः साहिः पुलकिताङ्गो जातः ।

अथ विविधविद्याविद्योतमानमानसे यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधियोगाङ्गनिपुणे सानेकान्तेवासिनि-अनेकान्तवादिनि जगद्गुरुचरणसरोरुहेऽनुरक्तं श्रीमदकब्बरसाहिं विलोकयन्तो विप्राः सामर्ष साहिम्प्रोचुः—हे राजराजिमुकुट ! ब्रह्माविष्णुमहेशाञ्जगतः कर्तॄन् ईश्वरान् भवन्तोऽपि जानन्त्येव, ईश्वरत्वेन, परन्तु ये जनास्तत्त्वेन न स्वीकुर्वन्ति, ते कथंमान्याः, तथाविधानाञ्जैनाना वचनमङ्गीकरोषि। तवकृते ते पन्थानो न शिवा मन्यामहे। सदाचारपद्धतिस्ते शिवकरा शाश्वतम्। अधिपस्य भवतो यथाभ्युन्नतिस्तथाकर्तव्यमस्माकम्प्रतिभाति, प्रभुणापि हितम्वचः स्वीकर्तव्यम्। महात्मनामादरः समुचित एव परन्तु मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् इति महात्मनो लक्षणन्तु मनस्यन्यद्वचस्यन्यत् कर्मण्यन्यत् इति। राजनीतिविदां राज्ञाम् प्रजानाम् गृहस्थानाम् सन्यासिनाञ्च प्रत्येक भिन्नो मार्गः, अथ यद्रोचते भवते तन्मन्तव्य भवद्भिरिति। साहिः सर्वं श्रुत्वा तद्रागवासनानासिततया प्रत्युत्तरमप्रच्छयन् सभां विससर्ज ।

द्वितीयेऽह्नि सूरिणा सह वार्तालापं विदधता साहिना सस्मितवदनेनाभाणि हे गरिष्ठसूरे ! ब्रह्मादीनामनीश्वरत्वञ्जैनसिद्धान्ते किम्वा ईश्वरत्वम् ? अनीश्वरवादिनो नास्तिकाः किम् ? विजयसेनसूरिः स्तोकं विहस्य—राजेन्द्र ! शृणु जैनागमे—अष्टादशदोषरहितः शान्तः कालत्रयावभासको जन्ममरणादि रहितः नित्यः चिदात्मा अचिन्त्यस्वरूप ईश्वर इत्युक्तो भवति,

॥ ५५

तमीश्वरं कायेन मनसा वचसा वा वयमाश्रयामः तथाविधा ब्रह्मादयो नेति तत्साक्षात्कारकर्ता एव निश्चिनुयात् । अस्मन्मते तथाविधेयो यः स स ईश्वरः। किञ्च–अनीश्वरवादिनो नास्तिकत्वे नापि भवत एव अपितु मीमांसकसाङ्ख्यादीनामपि नास्तिकत्वं स्यात् एवमन्येषामपि । तदुपायः क इति प्रष्टव्योऽयं जनः। कलहप्रयोजकनाममात्रोद्घाटनं सद्विवेकिना मुधाऽऽग्रहो विवेकिनामित्यत्र भवन्त एव विचारयन्तु। जगतीतलेऽस्मिन् एकार्थवाचको नानाविधः शब्द इत्यत्र केषाम्प्रश्नाः। देशकालजात्यादिभेदेन एकस्यैव कम्बुग्रीवादिमत्पदार्थस्य घटः कलशः कुम्भ इत्यादि नाम। एवमेव ईश्वरप्रतिपाद्य-अर्थस्य-नाममात्रं गृहीत्वा तन्मतं साधु–असाधु वेति विवेकोऽपाधुरेवेत्यस्माकं मन्तव्यः, इति सारवचः श्रुत्वा महीशो भूदेवमायां ज्ञात्वा देवमायामिव तद्भावं मेने। अथैकदा चित्रशालायां साहिना सह वार्तालापं कुर्वन् विजयसेनसूरिः समायाते प्रसङ्गे 'नरदेव! आवसथं विशालः प्रतिभाति परन्तु मधुपूरितकलशे विषबिन्दुप्रक्षेपो यथानुचितस्तथैव सदाये मृतद्रव्यकादायः प्रतिभाति, तद्द्रव्ये च्छुद्धिः हीनान्त्यजन एव दृश्यते, भवादृशानां महतां भूमण्डलाधीशानामकिञ्चित्करमेतद् द्रव्यग्रहणम्। जगद्गुरुसाक्षाद्विवेकतोऽनयो राज्ञातः–सन्तोषादनुवनसुखलाभो भवति तज्ज्ञातं भवेत्। अथ पशुचरणकरविमोच इव मृतद्रव्यकरविमोच आवश्यकः प्रतिभाति याञ्चा मे महती पुनः पूरणीया इति सस्नेहमवदीत्। ततः साहिः सस्मितमाह हितैषिन्! आदेशोऽयं शमुरीकृत्योऽस्ति मया, परन्तु ममैकाग्रहोऽपि मन्तव्यस्त्वया स च लाहोरनगरे चतुर्मासीं कर्तुमिति, ततः सूरिः–ओम्, साहिः–आम इति परस्परं मामोदं चक्रतुः।

अथ तत्र चतुर्मास्यां रामरसराम (३६३) संख्यकान् वादिनः शास्त्रार्थे पराजित्य साहिदत्त"सवाई" पदवीमुरीकुर्वता साहि-

संस्थापितविद्वत्परिषन्नागानन्दराजजगद्गुरूणान्नामानुसारि पञ्चसंस्तीयन्नाम तदङ्कित स्तीचक्रे ।

एकस्मिन् समये भारतसार्वभौमसाहिः सेनसूरिगुरुमप्राक्ष्ड-हे जगद्गुरु प्रिय ! भवन्तः कियन्तः सतीर्थ्याः जगद्गुरुणा कियन्ति आराधितानि तपांसि ? तद्भणितुम्प्रभवन्त्वार्य्यपाद । सेनसूरयः-भगवनय ! पञ्चविंशत्यधिकशतद्वयमष्टमाख्योपवासत्रयन्तप । अशीत्यधिकशतं षष्ठाख्योपवासद्वयम् । षट्शताधिकपञ्चसहस्रमुपवासः । सहस्रद्वयमाचाम्लिनाख्यम् । सहस्रद्वयन्नीवी । विंशस्थानस्यापस्या विंशतिः । एकादशमासस्य प्रतिमावन्तरः । सूरिमन्त्राराधनया । स्वर्गलोकं गते गुरौ त्रयोदश मासावधि-उपवासायम्बिलैकाशनादय । चतुः कोट्यः सज्झायाः । दशवैकालिकस्य नैत्यिकपाठः । वदितरे समये च ध्यानादयः । श्रीमदाज्ञाचरणचञ्चरीकाः पञ्चविंशतिशतसंख्यकाः साधवः । साध्वीनाञ्च संख्या पञ्चसहस्रम् । एतन्निशम्य दिनचर्या साधुसाध्वीनामिपतीः सख्याः श्रुत्वा साहिः क्षुब्धो बभूव ।

इतः पाटणीये चातुर्मासे पूर्णे जगद्गुरवः सकलपापविध्वंसकसिद्धाचलयात्रां कृत्वा पतनरावनपालनामदानाद्दिशाखम्भातमाजग्मुः । तत्र श्रीकरकमलात्-मेघजीपारिखस्य प्रार्थनया नवनिर्मितमन्दिरस्य जिनप्रतिबिम्बानाम्प्रतिष्ठा महता समारोहेण समजनिष्ट ।

एकदा सूरिकुलकुमुददिवाकरो हीरसूरि, विशालकायेन हनोवरखोजिना-एकाशने मनाक्परिमिताऽन्नभोजिना तत्रत्येन विलासिना गर्वितेन तिरस्कृतो ग्रामाद्बहिष्कृतः । अचिरमेव तद् दुराचारसन्तापतापितजैनजगतीन्निरीक्ष्य जगद्गुरुस्तद्दुराचरण-

परिहर्त्तुकामः धनविजयान्तेवासिनं श्रीमदकब्बरान्तिकेऽप्रैषीत् । तत्र गते धनविजये शान्तिचन्द्रोपाध्यायस्तदास्याद् वृत्तं श्रुत्वा गुरोरपमानजन्यदुःखदुःखितस्तदानीमेव राजमन्दिरं गत्वा साहिन्तद्वृत्तान्तं व्याजहार । अकब्बरश्चश्रुत्वैतद् भृकुटीकरालनयनस्त्वरितमेव श्रीमद्विजयहीरसूरिगुरूणामपकर्ता मृत्युभाग् भवेत् इति सार्वजनीननियमं कृत्वा पत्रमेकं धनविजयाय दत्वा तदनुगामिनं कर्मचारिणं शीघ्रमेवाप्रैषीत्, ततो झटित्येव प्राप्तजगद्गुरुपादपद्मयुगलदूतमुखाद्विदितनिजप्राणदण्डो हबीबलो "नान्यः पन्था विद्यतेऽयनाय" इति मत्वा नेत्राभ्यामश्रुजालं मोचयन् जगद्गुरुचरणमुपेत्य सविनयम्प्रोवाच–हे दयासागर ! त्वम् अज्ञानिना मया तव दयापात्रणापमानितः, यन्निमित्तो दण्डो मृत्युरस्माकं साहिशासितः । अथारभ्य केऽपि मुनयो निरपराधिनश्च तिरस्कृता न स्युरिति शपथं गृह्णामि । अवत्रायस्व त्रायस्व माम् । अवनीतलेऽस्मिन् नहि कोऽप्यपरः समर्थः साहेराज्ञापरावर्त्तयितुम् । भवांश्च जगताम्प्रियः, निवारयतु मामन्तात् । गत्वा मन्निकेतनम्पुनीहि शीघ्रम् क्षमस्वापराधम्मे, अन्यथाऽयन्ते दासस्तवान्तिक एव महायात्रां करिष्यतीति ।

अथ करुणानिधिः जगद्गुरुः सस्नेहम् वक्ति–हे सुलतान ! मा खेदं गच्छ, त्वयाहमपमानितोऽप्यरुष्ट, एवञ्जानीहि, साधूनां मानापमाने तुल्येस्तः । परन्तु तवाचरणमचारु चकास्ति, तदयुक्तम् अथापि तथा विचारणा निष्कासिता चेतसश्चेत्तदा प्राणदण्डानर्ह इत्याशा प्रतिभाति । तथाकृतप्रतिज्ञश्चेदितो गच्छ प्रमुदितमानसः । हबीबलः–दयार्द्रचित्तगुरूणामसीमकृपामवलोक्य पादौ निपतन् धन्यः प्रभो ! धन्य इति प्रलपन् भवदादिष्टम्वच ऊरीकरोमि ननु, तथा कृत्वा स सानन्दं स्वसद्म गत्वा जगद्गुरु-

गुणगानरतो बभूव।

एकदा पटश्रकलाऽऽवृतसूरिमुखारविन्दतो देशनां श्रुत्वा मनोरमा हवीबलश्चान्ते जगाद–हे सूरिगुरो ! प्रवचनसमये पटखण्ड–प्रच्छादितमुखः कथम्प्रत्यवतिष्ठते भवान् ? जगद्गुरुः—ज्ञानप्रयोजकीभूते पुस्तके निष्ठेवपतनाज्ज्ञानस्याशातनाभिया पटखण्डैराच्छाद्यते मुखम् । हवीबलः–किम्भोः ! निष्ठीवनमशुद्धमुत शुद्धम् ? गुरवः–मुखान्निर्गतेऽशुद्धिः, अन्यथा तस्य शुद्धिरित्येव जानीहि। ततो विकसितहृदयसरोजकुड्मलो हवीबलः–गुरुदेव ! अनुकम्पया भवतः सर्वमनज्ञातम् । अथैका लालसा मदीया चकास्ति, सा च याश्वातात्रकी यदा स्यात्तदैव पूरिता स्यादिति । अथ गुरवोऽगादिषुः–सौम्य ! यद्येषा लालसा, तदा श्रूयताम् । प्रथमम् मद्यमांसाशिनो भाभूयासुर्भवन्तः । राज्ये तव यथा हिंसा न स्यात्तथा घोषणा कार्या। नातः परं किमपि वक्तव्यम् । नाप्यन्या याञ्चा च। हवीबलः–ओम् । यथाज्ञापयन्ति भवन्तः।

एकदा—पथिक एकविप्र–अहिना दष्टो मूर्छितस्सन्नपतत् । तद्भाग्योदयात्कुतश्चित्समागच्छन्नेकः श्राद्धः–तदीयं सर्पविषज्ञानन् हीरसूरिनाममात्रैकमन्त्रञ्जपन् निर्विषन्तञ्चकार । विप्रश्च द्रागेव उत्थाय मधुगिराऽवोचत्–हे सखे ! धन्यस्त्वम् । कालपाशान्मां जुगोपिथ । आजीवनन्तव ऋणीजातोऽहम् । अथ सकरुणम्पृच्छा प्रपूर्यताम् । को मन्त्रस्त्वया पठितः । येनाहमपि त्वादृश उपकरिष्यामि । श्राद्धः–हे भूदेव ! नाहं किमपि वेद्मि, अस्माकं गुरुहीरसूरिनामा साधुशिरोमणिरात्मवज्जगज्जन्यमानश्चकास्ति, तन्नाममात्रेण मन्त्रादपगतन्ते गरलम् । ततस्तदीयम्वचः श्रुत्वा स दान्तो विप्रः स्वात्मनि तद्गुरुमाहात्म्यममोघं मत्वा

तद्गुर्वन्तिके गत्वा दण्डवत्प्रणामोत्तरं जगाद–महात्मन् ! नाम्ना वे सर्पविषं मदीयगात्राद्वहिर्गतम्, शक्तिस्ते दैवी प्रतिभाति, नात्र विप्रतिपत्तिः । अथागमनं मदीयं भवत्पार्श्वे दारिद्र्यविषापहरणाय । नाम्ना वे सर्पविषो जातस्तदाऽमोघदर्शनाद्दारिद्र्यविषापहरणे विलम्बं करिष्यति किम्, ? नहि नहि । विश्वासो मे दृढीयान् तदप्यपहरणस्येति । जगद्गुरवः–वेदपाठिन् ! अहन्त्यक्तविभवो धर्मलाभमात्रदो भिक्षुको वर्ते, त्वद्विषहर्ता श्राद्ध एव पुनः कश्चिद्भविता इति । ततस्तदानीमेव गुरुसमीपस्थ एकः श्रावको गुरावात्यन्तिकीं श्रद्धान्तदीयाज्ञानन् तस्मै तथा द्रव्यन्दत्तवान् येन तद्विषश्चापि बहिर्गतम् । ततस्तदीयगुरोर्नाम जपन् तद्भक्तं धन्यवादभाजनञ्जानन् विप्रः स स्वगृहञ्जगाम ।

अथ प्रतिग्रामम्पर्यटन्तो जगद्गुरवो राजराजेश्वराणां राज्ञान्तदन्येषाञ्च प्रतिबोधपूर्वकम् आसवमांसाखेटकपरदारोपगमनादिदुर्व्यसनपापसिन्धुभ्यो बहिः कुर्वन्तो जनान् सन्मार्गमार्गान्दर्शयन्तश्च यथाकालं खम्भातदिशा अङ्काब्धिरसभूमौ (१६४२) तपस्ये श्रीशत्रुञ्जयतीर्थरेणुभिः स्वात्मानं कृतकृत्यञ्चक्रुः । तत्र श्रीमतामागमनपूर्वमेव नानादिग्देशतो लक्षत्रयमिता मानवा आजग्मुः । यात्रिकवर्गकरविमोचकानां महात्मनाञ्जगद्गुरूणान्दर्शनाय अत्युन्नततीर्थात् पुण्योपार्जनाय च लोलुपास्ते दर्शन्दर्शम्पराम्प्रीतिमाजग्मुः । तत्र तीर्थे श्रेष्ठिवर्य तेजःपाल, रामाजी, कुवेरजी, ठक्कुरोपनामक यशोजी, मूलाश्रेष्ठी द्रव्येभ्यो महामन्दिरन्निर्मितमासीत्, तत्रत्यजिनदेवप्रतिकृतीनाम्प्रतिष्ठा जगद्गुरुकरकमलेभ्यः सञ्जाता । तदवसरे च डामुरनामा श्रेष्ठी गुरुपादान्तिके सप्तसहस्रेभ्यो राजतद्रव्येभ्यो ज्ञानमर्चयन् वासक्षेपन्तेभ्यः कारयामास । द्वात्रिंशद्वर्षको रामाजी वल्लभया सह त्रयः पञ्चाशद्व्यक्तिमिश्र

॥ ६०

गुर्वन्तिके ब्रह्मचर्यव्रतपालनस्य नियम स्वीकृत्य महाप्रशस्यो जातः ।

जगद्गुरु-हीरसूरिमहोदयानान्तीर्थयात्रासमये निम्नग्रामीण श्रीसंघः समुपस्थितः ।

| | | | |
|---|---|---|---|
| फतेपुर शिकरी | सुन्दर | वडोदरा | नाडलाइ |
| पाटण | नडियाद | वारेजु | वागडियो |
| अमदावाद | वडनगर | आमोद | नडली |
| मालवदेश | डामलूनि | सिनोर | कुणगिरि |
| मेवाड | कडी | जम्म | प्रांहांवोज |
| मेवाति | भरुच | जम्बुसर | महीअज |
| मेडता | मगवा | केरवाडु | पेथापुरी |
| आगरा | रानेरा | मथुरा | वोरसद |
| जेसलमेर | घोघा | गंधार | वागड |
| विसलपुर | नवानगर | सुरत | मगसुदावाद |
| सिद्धपुर | मागरोल | कठा | कुंभलमेर |

| | | | |
|---|---|---|---|
| महेसाणा | वेलाउल | धोलका | फलोधी |
| ईडर | देवगिरि | धंधुका | आबू |
| अहिमनगर | विजापुरी | वीरमगाम | लाहोर |
| सावली | वईराट | जुनागढ | उनादीव |
| कपडवंज | नंदबार | कालावाड | मालपुर |
| मातर | सिरोही | नवानगर | |
| सोजीतरा | महिमदावाद | राधनपुर | |

तत्र चातुर्मासीं कर्तुं स्वयामपि नानाप्रार्थनायामूनाश्रीसंघस्यैव प्रार्थना स्वीकृता बभूव । ततः कियद्दिवसानन्तरं कृतविहारो जगद्गुरु रुन्नतपुरी मागत्य श्रीमालज्ञातीय शाहवकोरं नूतनदीक्षितं कुर्वन् चतुर्मासीं धर्मदेशनासुधया पुपोष ।

कियद्दिवसानन्तरञ्जगद्गुरूणां स्वास्थ्यस्यानुकूलत्वमपश्यन्तो भक्ता विहारमवरोध्य प्रतिक्षणं सेवापरायणाः पुनरागामिनीश्चतुर्मासींस्तत्रैव पुर्य्याङ्कारयामासुः । जनश्रुत्या श्रुत्वा गुरूणामप्रतिकूलस्वास्थ्यवृत्तं जामनगरवासिजामसाहिबस्य मुख्यवजीरपदालङ्कृत—अवजी भणशाली तदन्तिके गत्वा गिन्नीपदवाच्येन तदीयनवाङ्गानि पूजयित्वा तदङ्गप्रोक्षणादौ सोदारं लक्षमितन्द्रव्यं व्ययीकृतवान् ।

उमतनगरे विराजमानस्य गुरो भैषज्यासेवनाद्दिनानुदिनं वपुषः क्षीणतान्निरीक्ष्य जनपदाश्चिन्तयन्तः साग्रहम्प्रोचुः । हे गुरुदेव ! यदि प्राणपालननिमित्त भैषज्यन्न ग्रहीष्यन्ति भवन्तस्तदा वयमपि–आबालवृद्धा अन्नजलपराङ्मुखा भवेम। अवस्था भावत्की न रञ्जयत्यस्मान्, भैषज्यसेवनं समुचितम्मन्ये स्वस्थे श्रीमच्छरीरेऽस्माकं धर्मतरुः फलिष्यति । अस्मदादिकल्याणाय भैषज्यसेवने न चास्ति कश्चिद्दोषः श्रीमताम् इति । आबालवृद्धानान्तथाविधाम्प्रतिज्ञामवलोक्य जगद्गुरवस्तान् सन्तोषयामासुः ।

एकदा शिष्याणामाग्रहवशात् पूर्वं केवलो गुरुर्भक्षितवान् । तत्रत्यगोचर्य्यां लवणाधिक्यमासीत् परन्तु गुरुणा न ज्ञातम्, यतो हि साधवो जितेन्द्रिया भवन्ति । तेषां राशनप्रत्यक्षे मधुराम्ललवणकटुकषायतिक्तानां रसानामन्यथमानुभवे न वैचित्र्यम्, अपि तु साम्यमेव जायते । एवं श्रावणप्रत्यक्षे प्रियमप्रियञ्च वचः समानं भवति, एवन्तत्तदिन्द्रियजन्यसुखन्न कामयन्ते संयमिनः । यदा तेन गोचरीदात्रा सद्गृहस्थेन भोक्तुमुपविष्ट एकग्रासश्च ग्रहीतस्तदावज्ञातं पाके लवणाधिक्यम् इति तदाश्चिन्तयति सः–अहो ! कथ गुरुणा भुक्तं भवेत् ? भुक्तश्चेत्स्वास्थ्यमथापि प्रतिकूलम्भविष्यति, अनर्थः सञ्जातः । ततो झटित्येव तदन्तिके समागत्य प्राह–भगवन् ! मा भोक्तव्यम् मा भोक्तव्यम्, अद्यतने पाके लवणाधिक्यञ्जातम् तेन भवतः स्वास्थ्यस्य प्रतिकूलता सम्भाव्यते । इति श्रावकोक्त शृण्वता तदन्तेवासिना पश्चात्ताप कुर्वता गुर्वन्तिके जल्पितम्–अहो न जाने किमद्य भविष्यति ? मदाग्रहवशादेव श्रीचरणैर्भुक्तम् ।

तथाविधं सर्वेषाम्वचः श्रुत्वा गुरवोऽगादिषुः–भो भो भव्याः ! तावता स्वास्थ्यस्य मे प्रतिकूलता न स्यात् न चापि

॥ ६३ ॥

तज्ज्ञानम्मम। मा चिन्तयत पश्चात्तापञ्च मा कुरुत इति।

अथातीते कतिपये काले जगद्गुरूणां चिन्तनीयस्वास्थ्यन्निरीक्ष्य श्रीसंघस्तत्रत्य एकत्रीभूय विमृश्य च विजयसेनसूरिसविधे पत्रमलिखत्। तद्यथा—पूज्यश्रीमद्विजयसेनसूरिगुरुदेव! सविधिवन्दनानन्तरमिवेदनं यदत्र पूज्यजगद्गुरूणां स्वास्थ्यमिदानीम्प्रतिकूलम्प्रतिभाति, तदत्र त्वरितं समागत्य गुरुदेवचरणसेवासक्तो भवन्तु भवन्त इति श्रेयस्कोऽत्रत्यः श्रीसंघः। इति। तदानीं सेनसूरिर्लाहोराद्विहारं कृत्वा चतुर्मासीं कर्तुं महिमनगरमागच्छन्नासीत् तत्र तद्रूपमाप्य तद् वृत्तं वज्रपातमिव जानन् गुरुपूताङ्घ्रियुगलदिदृक्षयाऽकृत्वा चतुर्मासीन्ततोऽतन् पाटणं यावत् प्रविशति तावदेव चतुर्मासीन्निरीक्ष्य निरूपायस्तत्रैव तदानीन्तनकराकुलालं यापयन् प्रतिपलं गुरुचरणमनस्कः पर्यूषणे कल्पसूत्रं वाचयन् पूर्णे पर्वणि अनारतच्छन्दनन्ददानः साहिश्रीमदकब्बरान्तिके तदीयदलेन सत्रा श्रावकं सम्प्रेष्य, गुरुसेवायां श्रावकगणानप्रैषीत्। सूरिदलनीयमानः श्राद्धः साहिसमक्षे गतोऽपि महाराजस्यारामे यात्रान्निरीक्ष्य दलप्रच्छन्नेव संघानुगो बभूव। कियद्दूरं गतेषु साहिषु एकस्तडागः समागतः, तत्रैको नरो मीनमारणपरायण आसीत्। दृष्ट्वा स साहिस्तं समाहूय प्रियगिरा जगाद। हे लुब्धक! तवादो व्यसनं परमं प्रियञ्चकास्ति, परन्तु यथा ते प्राणास्तथामुष्यापि, एते च निरपराधिनः, हनने तस्य तदीयात्मनि कियद् दुःखं स्यादिति तथाभूतस्य तवैवानुभवः स्यात्। यदि च तत्रास्था न भवेत्तदा मद्वपुषा निजजिह्वालौल्यम्पूरय, परन्तु रीत्यानया परपीडनन्त्यज! नोचेद्दण्डस्तत्तुल्यो निपतः। पर्यूषणे हिंसको हिंसापात्र इति नियमोल्लङ्घकस्त्वमेवासि, तत्तूर्णं वद किं कर्तव्य-

न्तरयेति। लुब्धकः मनसि चिन्तयति, अहो ! महाननर्थः कृतो मया, अहमेव पुरानियमभङ्गमकार्षम् । नियमभङ्गेऽस्मिन् प्राणदण्डो मम नियत एवास्ति, परन्तु दण्डञ्च दत्त्वाऽन्यथैव जल्पति, अस्तु । अथ जीवहिंसां न कुर्मः शपथेन विश्वासन्ददामि । प्रकाशम् । स्वामिन् ! नूनं मयाऽकर्तव्यमनुष्ठितम्, अथाजीवनं न च पीडयिष्यामि जीवमात्रम्, शपथं गृह्णामि-इति दीनमवचस्तदीयं श्रुत्वा साहिः-अथैषा प्रवृत्तिश्चेत्तदानान्यः पन्था इति जानीहि । इत्युक्त्वा तं तत्याज, पुरस्ताच्च चलितः ।

एवंविधं सदाचरणन्तदीयमिरीक्ष्य श्राद्धः श्रीस्थानसिंहो राजमन्दिरे स्वस्थं राजेन्द्रमाह-महीन्द्र ! दत्तहलसेनसूरि-प्रेषितोऽहम् इति भणन् पत्रन्ददाति । साहिरपि पत्रम्पठन् जगद्गुरोः स्वास्थ्यं शोचनीयञ्जानन् चिन्तापारावारे मग्नश्चिरं मौनन्दधार । गुरुदर्शनार्थं भावनाञ्चकार ।

तन्मध्ये गुरवः श्रीहीरसूरयः स्वान्तसमयं मत्वा साधुश्राद्धान् परमनन्देश व्याजहार । हे आत्मबन्धो ! मध्यात्मन् ! अयं अयमात्मा शरीरादस्मादसंयुक्तो भविष्यति, तथात्वे मा चिन्तां कार्षीः । यतो हि ' जातस्य मृत्युर्ध्रुवः । किञ्च-

तित्थयरा गणहारि सुरवइणो चक्कि केसवा रामा। संहरिया हयविहिणा का गणणा इयर लोगाणम् ? ॥१॥

अथ विजयसेनसूरिस्तत्र प्रियोनिखिलान्मनोरथान् सम्पादयिष्यति। तदाज्ञापि तवानुकूला भविष्यति। मान्यः स भवद्भ्यः। असद्वियोगे सेनसूरिं मामिवानजानीहि । सोऽपि मां विस्मारयिष्यति स्नेहबाहुल्येन । अतश्च-द्वयोमध्यां संयमं स्थिरं ज्ञात्वा धर्मेऽनुरागः कार्यः, इति गुरुगिरः सुधान्निपीय सर्वे कण्ठस्तम्भिता यथादेशः श्रीमतामिति सप्राणं न्यगादिषुः ।

अथ मुमूर्षुः सूरिराजो हीरविजयः सविनयम्प्रार्थयते—ये च तीर्थकरा भूता भविष्यन्ति वर्तमाना वा ते सर्वे संसारभीरोर्मम शरणी भवन्तु । एवं ये मुक्तात्मानस्ते सर्वे संसाराद्रक्षका भवन्तु । तथा ये श्रमणास्ते मम शरणं भवेयुः । एवमेव धर्मः स मम रक्षको भूयात् । पुनश्च—एकद्वित्रिचतुःपञ्चेन्द्रियसंज्ञ्यसंज्ञित्वेन चतुरशीतलक्षजीवयोनिषु भ्रमता मया भूजलवन्हिवायुवनानि—एकेन्द्रियाद्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाश्च ये जीवा इहभवेऽन्यभवे वा प्रमादादप्रमादाद्वा हतास्तज्जन्यं दुष्कृतं निखिलं मनोवाक्कायैरपि त्रिकरणशुद्धया आत्मसाक्षिकं गर्हामि । एवमिहभवे परभवे वा रुषा हास्येन भयेन लोभेन वा मया स्तोकमप्यलीकं भाषितम्, तथैव यन्मया कथञ्चित् परेषां द्रविणं गृहीतम्, पुनः प्रयोजने सत्यपि—विनादेशं क्वचित्तृणाद्यं स्वीकृतम् एवम्प्रतिभवं यन्मया देवाङ्गनया मनुष्ययोषिता तिरश्चा समं वा कथञ्चिद् भोगः कृतः, तथाकेनापि प्रकारेण अत्र भवे परभवे वा यन्मया परिग्रहः स्वीकृतः, तथा यदहं पञ्चमहाव्रतान्नियमविशेषान् सम्यक् न धृतवान् तथा यन्मया कथञ्चित् निशाशनं कृतम् पुनर्यत् क्रियासु शैथिल्यमालम्ब्यत एवम्प्रमत्ततायुक्तेन मया नियमा गृहीत्वा मुक्ताः तत्सर्वं पापं देवगुरुसाक्षिकं व्युत्सृजामि । तथा ये सत्वा जात्वपि पीडितास्ते सर्वे मां क्षाम्यन्तु एवं सर्वप्राणिभिः सार्धं मैत्री चास्तु मे अनुष्ठितधर्ममनुमोदयामि च । अथास्मिन्नसारे संसारे येन भुक्तेनाहारेण कदाचिदात्मा तृप्तिं न लेभे, तमाहारञ्जहामि, अथैनं श्रीपञ्चपरमेष्ठिमन्त्रो मम मानसे हंसवत् रमताम्, यथा पुत्र—कलत्र—भ्रातृ—धनधान्यादिपरिग्रहस्त्यक्तस्तथा वपुरद्यापि व्युत्सृजामि, एवं विधिना बाहुशररसेन्दौ (१६५२) विश्वगुरौ भवौदारिकं वपुस्त्यक्त्वा हीरसूरीन्द्रोऽमरपुरनिकेतनातिथिर्बभूव । ततस्तेन शून्यञ्जगत् पश्यन्तो नेत्राम्भ्यामश्रुजालम्पा-

तपन्तः शोकसन्तापसन्तप्तमानसास्तत्रत्या बभूवुः । श्राद्धाश्च क्षणमात्मानमाश्वास्य मृतशरीरं विविधसुगन्धिद्रव्यैर्विलेपयन्तो विशालानाम्नीं शिबिकामारोहयन्तः संस्कारभूमौ नयन्तश्चन्दनश्रीफलगोघृतादिभिर्दाहक्रियां कृत्वा तत आगत्य कृतस्नाना उपाश्रये शान्तिपाठं श्रुत्वा पुनरगाधशोकाब्धौ मग्ना अशान्ता बभूवुः ।

जगद्गुरुपदसरोजानां निम्ननिकेतने चतुर्मास्यः—

| | | | |
|---|---|---|---|
| पाटण ८ | खमात ७ | अमदावाद ६ | सिरोही २ |
| सांचोर २ | अभिरामाबाद १ | फतेपुरशिकरी १ | आगरा २ |
| कुणगिरी १ | म्हेसाणा १ | सोजीत्रा १ | बोरसद १ |
| आमोद १ | कावी १ | गंधार २ | राधनपुर १ |
| दिल्ली १ | लाहोर १ | मेडता १ | ईडर १ |
| जालोर १ | स्तम्भतीर्थ १ | मगशुदाबाद १ | इलाहाबाद १ |
| मथुरा १ | मालपुरा १ | नागोर १ | सूरत १ |
| आबू १ | फलोधी १ | राणकपुर १ | नाडलाई १ |
| पालीताणा १ | उनादीव १ | | |

उनाद्वीपे द्वितीयचतुर्मास्यां स्वर्लोकं गतः ।

॥ ६७ ॥

सूरिस्वर्लोकगमननिशायाः प्रथमप्रहरे ग्रामाद्बहिस्तडागान्तिके जपकुर्वन्तश्चत्वारो ब्राह्मणास्तडिदिव दिव्यविमानं निज-नयनाभ्यां दृष्ट्वा तन्मध्ये हीरसूरिवदनं विलोकयामस्त्वरितं चलन्तु इतिवार्तां श्रवणाभ्यां शृण्वन्तः प्रभाते श्राद्धगणानाहूय तामद्भुतां श्रावयामासुः, एवन्तन्निशावसानसमय एव साहिश्रीमदकब्बरस्य समीपे प्राग् वाग्बद्ध इव श्रमणवेषः स सुधर्मानामकं देवलोकं पार्श्वनामकविमानेन गतवानहमिति प्रोचिवान् ।

नगरनैगमेन वणिजा सूरिसंस्कारपदे शत्रुञ्जयतीर्थमिव नक्तं देवनिर्मितनाटकमालोक्य उन्नतनगरलोकानामग्रे तन्नाट्य-कथां समुदीर्य्यते स्म ।

तत्र संस्कृतभूमिभागे सहकारतरुः संस्कारकरणदिवसस्यैव त्रियामायां प्रथमसमय एव मञ्जरीभिः कलितोऽनल्पफलैः पूरणीभूतः । तद्दिदृक्षवो नगरलोका जनश्रुत्या तदन्यनागरिकाश्च पश्यन्तः परमाश्चर्यमधिजगुः । साहिरपि तत्फलन्निरीक्ष्य आश्चर्यं गतः ।

ततो द्वितीयेऽन्हि सर्वे मिलित्वा स्वर्गस्थतदात्मनः शान्त्यर्थं तद्दुःखखिन्नमानस्य धैर्यार्थम्पाटणस्थविजयसेनसूरिसविधे पत्र-दानपूर्वकं श्राद्धम्प्रेषयन्तः साहिपार्श्वे इतरत्रचतच्छोकसमाचारन्ददुः । जगद्गुरुनिधनवृत्तज्ञो जन उद्भ्रान्त इव सर्वे विस्मृत्य रुदन् प्रलपन् शोकार्णवे मग्नो जातः । अबलाजनश्च स्वात्मजन्मनमपि शिशुं हित्वा हा हा क मे गुरुरितिप्रजल्पन् इतस्ततो गवेषणां कुर्वन् पश्चात्तापञ्च कुर्वन् निधनस्थानञ्जिगमिषुर्बभूव ।

साहिश्रीमदकब्बरो जगद्गुरु-हीरसूरिनिधनवृत्तज्ञः शोकाकुलः सकलराजकार्यं हित्वा नृत्यगीतादिश्रवणम्परित्यजन् तद्गिन-

संस्काराय तत्र चतुरशीतिबीघापरिमितां भूमिन्दादानश्रमथद्धाञ्जलिन्ददौ ।

तत्र हीरसूरि-गात्रसंस्करणभूमौ मेघपारिखनामा द्वीपचन्द्रश्रेष्ठीश्रीलाडकीपतिः प्रियानाम्ना हीरविजयसूरेः-ऋषभदेवदेह-संस्कारस्थाने भरतचक्रीकारितस्तूपमिव स्तूपङ्कारयामास ।

इतो विनयसेनसूरिर्दलम्पठन्नेव भूमौ निपतन् गद्गदस्वरेण विललाप-अहो ! ममगुरुरकाण्ड एव दिवौकसाऽऽहूतः, तत्रापि माम्प्राणप्रिय हित्वैव परत्र गतः, नहि नहि पुनः समाधान वाचयित्वा-स्वर्लोकं गतो मे गुरुः हा हन्त ? हे ! गुरो ! श्रीमच्चरण-दर्शनेच्छया लाहोरतश्चलितः किन्तु हतदैवस्य मे श्रीमद्दर्शनमजातम् क्व गतोऽसि भगवान् अहो ! किं करोमि क्व गच्छामि, अथ हृदयस्थं कं कथयामि कस्मा गुरुदेवशब्देनाह्वयामि । कस्याज्ञां वहामि । अथ कथं विकसिष्यति मे मनोमुकुलम् हे गुरो ! त्वयि पर-लोकं गते धैर्यं निराधारञ्जातम् क शरणं विनयोयास्यति । सत्यं सत्यं इदम् । अथ करुणाया आश्रयः कस्स्यात् । शान्तिर्वैराकी-इवा । क्षमाधानाथा जाता ! । संयमस्य प्रियः कः स्यादधुना ? हे भगवन् ! भवद्भिना धर्मोपदेशसुधापाकः सन्तोषयति लोकान् । पशुपक्षिगणानां पिञ्जरस्थानां मोचकः कः स्यात् ? अहिंसादेवी कथं सत्कृतास्यात् । अहो ! अकस्मात्निर्मं कठोरहृदय कोऽधुना-द्रवीभूतं करिष्यति ? हे शासनशिरोमणे ! मयि तादृशीप्रीतिः क गताधुना, ममकृते स्वल्पकालमपि न स्थितस्त्वया । अथास्मद्-श्रुमोचकः कः संसारे ! हा देव ! जगद्गुरुभिना हीनकृतस्त्वयाहम् हन्त ? अहा ! स्वर्गेऽपि प्रयोजनं गुरुपादानाञ्जातम् ! खेद । हे गुरुदेव ! पूज्यपादानामात्मनः शान्तिस्तत्रापि निश्चप्रचमेव भवेत् । परन्तु मदादिरहखिन्नानमनानां धैर्यं ययास्याच्चया दया

॥ ६९

ततोऽप्यावश्यकी, हा हन्त ! क्व मे गुरुः साम्प्रतम्, परीक्ष्यापि न वीक्ष्यते । हा हा ! अद्यैव जिनशासनस्य दिवाकरोऽस्तङ्गतः । तथासुधाकरोऽपि निद्रां गतः। हा हन्त !

एवंविधं विलपन् गुरुविरहखिन्नमानसश्चिर मौनन्दधार । अथगविहीरविजयसूरिसहस्रकिरणेऽस्तङ्गते, चातुर्वर्ण्यसंघसरोजकाननं सकोचन्दधानम् प्रतिमन्दिरम्प्रमुदितान् कौशिकानिव मिथ्यादृशो गर्जन्तस्त्वरितन्निरीक्ष्य श्रीसङ्घप्रार्थितो गणनायको गुणिगणगणनाग्रगण्यो विजयसेनसूरिः गुरुविरहविधुरीभावमुत्सृज्य धैर्य्यमालम्ब्यगुरुविरहाच्छादितं दुःखंतनूकृत्य घमतरोः सिञ्चकः पूर्वाचार्य इव तपागच्छम्पालयामास ।

ततस्त्वरितमेव तपागच्छगगनमण्डले उदयं गते विजयसेनसूरिदिवाकरे समु ज्झित शोकाः लोका इव लोकाः पराम्मतिमाजग्मुः॥

इतिशम्ः ॥

अब्दे स्वङ्कनभोवियद्भुजामिते श्रेयस्करे वैक्रमे
भाद्रश्वेतदले दिनेशदिवसे विश्वेतिथौ भास्वरे ।
भव्यानन्दविपश्चितातिरुचिरो ग्रन्थप्रसूनाञ्जलिः
पूतः श्रीगुरुदेवहीरचरणे प्रीत्यार्पितो राजताम् ॥ १ ॥



प्रातःस्मरणीय परमपूज्यपाद चरमतीर्थङ्कर वीरजिनेश्वरपरम्परागतप्रतिगच्छविद्योतकसुधर्म्मा-
स्वामिप्रभृतिश्रीमद्विजयहिमाचलसूरिगुरुचरणसरोजानाम्प्रत्येकं स्तुतिमुखेन

## लेखक–परिचय–दिग्दर्शनम् ॥

निर्ग्रन्थगच्छतरुबीजवरः सुधर्म्मा–स्वामी तथा चरमतीर्थकराङ्घ्रिसेवी ।
जम्बूस्तदीयपदपूजकमुख्यशिष्यो, वन्दे तदीयमपि तमप्रभवं सुभक्त्या ॥ १ ॥
शय्यम्भवं सविनयञ्च यशोनुभद्रं, सम्भूतिपादयुगलं मनसापि वन्दे ।
श्रीस्थूलभद्रमपि हस्तगिरिञ्च भक्त्या, श्रीसुस्थित गुरुवरं नरमञ्च वन्दे ॥ २ ॥
अथेन्द्रदिन्नं शुभकोटिकेश्वर, तदैव दिन्नं ननु सिंहसूरिकम् ।
निधाय सस्वामिकवज्रनामकं, नमामि तद्भाषित वज्रसेनकम् ॥ ३ ॥
चन्द्रनिभं चन्द्रगुरु सूरिवरं सानुनयम्, नौमि सदा क्षेमकरं वीरगुरुजैनगुरुम् ॥ ४ ॥
ख्यातश्रीवनवासिगच्छतिलक सामन्तभद्र गुरु, सूरिश्रीयुतवृद्धदेवविजयं प्रद्योतनं साञ्जलिः ।
तत्पादागतमानदेवविजयं श्रीमानतुङ्गं क्षमा–दन्तेशारिसुवीरसूरिजयदेवौ वीतरागौ नुमः ॥ ५ ॥

देवानन्दगुरुश्च विक्रमगुरुः पूज्यो नृसिंहस्तथा, जैनाचार्यसमुद्रसूरिविजयः श्रीमानदेवश्च नः ।
सूरिश्रीविबुधप्रभोऽथ च जयानन्दश्च सूरी रविः, पायाद्वीरपरम्परागतयशोदेवो वनौकास्सदा ॥ ६ ॥

प्रद्युम्नो मम सूरिराजतिलकः श्रीमानदेवो गुरू, राजन्तामनिशश्च मानसवरे हंसोपमः सूरिराट् ।
भव्यानाम्प्रतिबोधनाय विमलः श्रीजैनदेवोऽपरः, श्रीमद्वीरपरम्परागतगुरुश्चन्द्रो यदन्ते पुनः ॥ ७ ॥

उद्योतनः श्रीवडगच्छदेवः श्रीसर्वदेवोऽनुपलब्धदेवः ।
श्रीसर्वदेवो हृदये विभान्तु तूर्णं यशोभद्रपदारविन्दम् ॥ ८ ॥

स्मृत्वा पुनर्वै मुनिचन्द्रसूरिं स्वान्तेऽस्मदीयेऽजितदेवसूरिम् ।
भूयः सनम्रं विजयादिसिंहं सोमप्रभं सूरिवरञ्च वन्दे ॥ ९ ॥

तपागच्छनाथञ्जगच्चन्द्रसूरिं सुदेवेन्द्रसूरिन्तथा धर्मघोषम् ।
परम्पूज्यसोमप्रभं सोमयुक्तं तिऌं नौमि देवं युतंसुन्दरेण ॥ १० ॥

तथा तेन चित्तं च सोमं मुनिम्वै मुदा नौमि रत्नं सदा शेखरान्तम् ।
तथा सागरान्तञ्च लक्ष्मीकसूरिं सुमत्यायुतं साधुसूरिञ्च वन्दे ॥ ११ ॥

अह हेमसूरिन्तथाऽऽनन्दसूरिं तथा दानसूरिञ्जगद्वन्द्यहीरम् ।
मुहुर्नौमि भक्त्या जगत्तारकम्वै महावीरशिष्योपशिष्यं समस्तम् ॥ १२ ॥

अमलकमलचेता वीरशिष्योपशिष्यो–जगति विदितसूरिर्हीरनामा ससेनः ।
वसतु मनसि नित्य कीर्त्तिकल्याणयुक्तःकनकसहजयुक्तः श्रीतिलाख्यो गुरुर्मे ॥ १३ ॥

तिलकविजयपादद्वन्द्वपद्मोपभृङ्गं सकलसवलभालम्पूज्यपादश्च ऋद्धिम् ।
प्रियमखिलजनाना मान्यचारित्ररङ्गम्प्रतिपलमिह वन्दे साञ्जलिं वेज आख्यम् ॥ १४ ॥

अनुपमगुणवन्तं श्रीयशोवन्तमेवं कुशलविजयमेवं श्रीजितश्रीविजादिम् ।
जय विजयसुहर्षं चन्द्रनामानमेश हितविजयमहम्वै नौमि हीरागतञ्च ॥ १५ ॥

हितचरणविलीना रागमोहादिहीना विनयविजयखिन्ना नास्तिकादेश्च भिन्ना ।
हिमत–कमलमान्यश्रीगुमानाश्च सन्तः शमिह ददतु भव्यप्राणिचेतो लसन्तः ॥ १६ ॥

श्रीहिम्मतापरसुनामक सूरिवर्य–श्रीमद् हिमाचलगुरुर्जगता ललामः ।
ख्यातोऽस्ति भूतलतले मनसा मरालः, सराजतामिव सुधाकरपूर्णौमे ॥ १७ ॥

---

## अशुद्धि-शुद्धिपत्रम् ।

| पृ०—पं० | अशुद्धि— | शुद्धिः— | पृ०—पं० | अशुद्धि— | शुद्धिः— |
|---|---|---|---|---|---|
| ४ १० | दश | दर्शं | २४ २ | रुवणा | चरुणा |
| ११ ९ | भगिनी ! | भगिनि ! | ३६ ८ | ये | × |
| १४ ९ | जना | जैना | ३७ २ | चक्रनर्ती | चक्रवर्ती |
| १५ २ | मचयित्वा | मर्चयित्वा | ३७ ५ | न्यूनाधिका | न्यूनाधिकः |
| १५ ८ | मविष्णुता | भविष्णुता | ४१ ६ | गुरो | गुरौ |
| १५ ८ | दीक्षा | दीक्षां | ४३ ७ | किशा | किमा |
| १६ ३ | पनयो | पन्तो | ४८ १२ | स्वागंत | स्वागतं |
| १७ १ | ववल | धवला | ५० १३ | आस्या | आस्था |
| १७ २ | मरोजं | सरोजं | ५२ ८ | बिहार | विहार |
| १७ ५ | पमय | समयं | ५३ २ | नोद्धार | नोद्धारः |
| १७ १० | त्रमासिक | त्रैमासिक | ५३ ६ | रसान्त्रि | रसाब्धि |
| २० ३ | अयेञ्जै | अथैवञ्जैनजनाना | ५८ ६ | पात्रणा | पात्रेणा |